॥ श्रीकेशवाय नमः ॥

अथ गोविंदकविकृत

# पुष्पसेनतनयराज्याधिरोहणं

CHECKED 1979 Initial

# नाटकं ।

प्रती—१०००

मुद्रक—शं. न. जोशी, ८१८ सदाशिव पेठ, 'चित्रशाळा' प्रेस, पुणे शहर.

प्रकाशक—रा. रा. देवराव महादेवराव वकील. मु. लातूर, जि. उस्मानाबाद व रा. गोविंदाचार्य गुराचार्य नागरहळीकर मु. बरदापूर; जि. बीड.

स्टाक प्रमाणीकरण १९८४-१९८५

मूल्यमेकरूप्यकम ।

॥ श्रीकेशवाय नमः ॥

अथ गोविंदकविकृत

# पुष्पसेनतनयराज्याधिरोहणं

नाम

# नाटकं ।



स्वेन रचितं नाटकग्रंथमिमं
स्वयमेव दृष्टिपूतं कृत्वा
रा. रा. शंकरेण नरहरिपुत्रेण
जोशीत्युपपदधारकेण पुण्यपत्तन
स्वीयचित्रशालाख्यमुद्रणालये
वसुभूवसुमितगृहनंबरे
मुद्रितम्

।

स्वाधीनानि कृतानि ।

---

मुन्यब्धिवसुभूसंमितशालिवाहने शाके मार्गशीर्षे
शुक्लपक्षे द्वितीयायां बुधवासरे पुस्तकमिदं
साकल्येन मुद्रितमासीत्

मूल्यमेकरूप्यकम् ।

## ॥ श्री ॥ वेंकटेशप्रसीद ॥



इदानीमस्मिन् भरते वर्षे गीर्वाणभाषासरस्वतीसदनांतः प्रवेशमात्रविरक्त-
बुद्धीनां श्रीमद्धरिपदारविंदमकरंदास्वादनब्रह्मचर्याणां रवितनयराजधानीगत-
नानायातनाभोगनिर्बंधानां जना नामीदृशीं दशामवलोक्यपरमकृपालुस्तेषामल्प-
श्रमसाध्यं विदितेठाबाईस्वमातृतुल्यसकलपरललनो हरिपादपद्मयुग्मलुब्धोगोविं-
दनामा वृत्तरत्नाकरोक्तसर्ववृत्तबद्धश्लोकं कंचित्पुष्पसेनतनयराज्याधिरोहणनाटकग्रं-
थंतत्वज्ञानप्राप्त्यर्थंहरौ भक्त्युत्पादनार्थं वा व्यरचत् । ननुविदितसकलपरललनः
कथं स इत्युक्ते तेनैव स्वकृते ग्रंथांतरे सर्वजगदिदं पतिव्रतामयमिति मनसि
ज्ञात्वा प्रोक्तोऽयं श्लोकः ॥ यस्मिंस्थिते हरिकथाश्रवणेन किंच पत्युर्व्रतेन
तपसा महिलाजनस्य ॥ दानेन किं पतिरतव्रतयुक्तकाभ्यस्त्रीभ्यो नमोऽस्तु मम
सादरमेव नित्यं ॥ १ ॥

गोत्रावतंसस्ययशस्तनूजा गोविंदसूरेर्जलधीन्प्रपन्ना ॥ अंत्रारिवप्रेक्षितुमस्य-
कांतिं रराज तुच्छीकृतचंद्रकांतिः ॥ २ ॥ स्वसूनुसंदेहकरैर्विगूढाक्षीरोदाधिंचा-
प्युदधीन्जिगाय ॥ जेतुंस्वभासैंद्रगजं जगाम जित्वा पुनर्विष्णुपुरं ययौसा ॥ ३ ॥
तत्पादलग्नंजनकस्यचित्तं विलोक्य हृष्टा स्वयमप्यभूत्त ॥ कटाक्षजातापि तदीय-
पादपद्मामृतास्वादनसक्ताचित्ता ॥ ४ ॥ तदलंवृथाप्रजल्पनेन । स एव विदुषो-
विज्ञापयति । स्वेनैव संशोधितेप्यस्मिन्ग्रंथे मुद्रणकारहस्तदोषाअस्मद्दृष्टिदोषाः
स्थिताश्चेत्तान्स्पष्टीकृत्वाऽनसूयवस्तस्मै निवेदयंतुविद्वांसः । इत्यलं । कविनैवकृता
प्रस्तावना समाप्ता ॥



२८६
२७-८-७२

॥ श्रीगणेशाय नमः ॥

# अथ प्रथमोंकः ।

निर्विघ्नमस्तु ॥ अथ पुष्पसेनतनयराज्याधिरोहणनाटकप्रारंभः॥

भूमिः शून्यतमा यदा शठमतिर्दर्पांधभूतस्तदा
भर्त्रा शास्त्रनिषिद्धकर्मनिरतस्तं नारसिंहो रिपुं ॥
यो यस्तद्वधकुद्धयोत्थुमनसस्त त्सूनुपीडासहो
हत्वा भूमिमपालय त्सविनयंत्वीशः सुतान् पातु सः ॥ १ ॥

नान्द्यन्ते

**सूत्रधारः**—अलमनेन परिषज्जनकुतुकविमर्दकारिणा श्रमेण। एवमहमार्यमिश्रान् प्रणिपत्य विज्ञापयामि यदिदं वयं पुष्पसेनतनयराज्याधिरोहणं नाम प्रकरणंआश्रित्यैनमारधयामः । एतत्कविः किल ॥

प्रज्ञाप्रस्थितशास्त्रिणस्त्वधिगता विद्या तथा वैष्णवी
निष्ठा यस्य दयावशात्स्थिरतरा भक्तिर्मुदे केशवे ।
बुध्या केशवपादपद्मयुगले स्तोत्राख्यपुष्पांजलि-
र्न्यस्तोऽयं ग्रथितं भुयारवसता गोविंदनाम्ना त्विदं ॥ २ ॥
लिखितापि बालभाषा व्यर्थामस्वात्र नोच्यते लोकैः ॥
गुरुसुतगोविंदेन रचितं तच्छून्यनाटकं रम्यं ॥ ३ ॥

( नेपथ्याभिमुखमवलोक्य। ) आर्ये इत एहि ।

**नटी**—( प्रविश्य ) आर्यपुत्र इयमस्मि आज्ञापयत्वार्यपुत्रः ।

**सूत्रधारः**—किमन्यदस्याः परिषदः श्रवणविषयभूतस्य संगीतस्य स्वरात् ।

**नटी**—कंसमयमाश्रित्य गीयतां ।

**सूत्रधारः**—नन्वमुमेन प्रचंडदिनकरकिरणप्रवेशमात्रेण कोमलानां महादेवकंठ इव तत्कंठासक्तया पार्वतीबाहुविद्युलतया विराजमानो विद्युलताभिर्विराजमानानां मेघानां चातकानंदकारिणा वृष्टिपातेन ब्रह्मक्षत्रवैश्यशूद्रवर्णसमद्भूता यन्नारायणानुग्रहात् यावत्धरिपदारविंदं शूद्रोऽपि न संगच्छाति तावदेवस्पर्शापर्शभावः कल्प्यते अन्यथा तमेव पूज्यतमं यदनुग्रहः कुरुते तथा कुर्वतं

वर्षऋतुसमयमाश्रित्य गीयतां संगीतकं । कांतेऽत्राचेतना अपि जीवा इव भांति यतः पश्य ।

नद्याः प्रवाहाः स्वकरैर्गृहीत्वा सुगंधि वस्तु ह्यसुगंधि वस्तु ॥
पुनंति मे शस्यमहीरुहेभ्यः पुष्पाणि पादे च समर्पयंति ॥ ४ ॥

**नटी**—तथेति गायति ।

सामंतचक्रेण सुयाचितोऽसौ सिंहासनस्थो मनसा कृतार्चिः ॥
उपायनान्येव पुरो निधाय विनामरेसेनहि पुष्पसेनः ॥ ५ ॥

( नेपथ्ये सरोषं । ) रेरे अमात्यपुरःसराः स्वबाहुपराक्रमावलेपतिरस्कृतराजबलिकर्माणं तावदुन्मत्तममरेश्वरमेव जेष्यामः ।

**सूत्रधारः**—( नेपथ्याभिमुखमवलोक्य । ) आर्ये कुत एतत् ।

**नटी**—अहं न जाने कुत इदं भवतीति ।

**सूत्रधारः**—भवतु शब्दानुसारेणावलोकयामि । ( नेपथ्ये पुनस्तदेव पठति । )

**सूत्रधारः**—(ससंभ्रमं सदृष्टिक्षेपं । ) प्रिये एष खलु महाराजः बाहुबलावलेपासमर्पितराजबलिकर्महेतोः क्रुद्धः पुष्पसेन इत एवागच्छति । तदित आवामन्यत्र गच्छाव इति निष्क्रान्तौ ।

प्रस्तावना । ततः प्रविशति सामात्यपुरःसरः सिंहासनस्थो राजा ॥

**राजा**—रेरे अमात्यपुरःसरा इति तदेव पठति ।

**सचिवः**—मर्षयतु मर्षयतु महाराजः ।

**राजा**—किं स जेतव्योऽथवोपेक्षितव्यः ।

**सचिवः**—जेतव्य एवसोऽपि वीरः अन्यैर्नृपैः सहायवान् । पश्य ।

कलिंगराजः सुबलः सोमदत्तस्तथाऽपरे ॥
नीलसेनश्च तस्यैव स्वाधीनान्भूप विद्धि तान् ॥ ६ ॥

**राजा**—अतो जेतुमशक्य इति उपेक्षितव्यः ।

**सचिवः**—नहि नहि । जेतव्य एव । तथाहि ।

उपेक्षिताश्चेद्रोगाश्च धीरसत्वैरवज्ञया ॥
रिपवस्तइवातोऽरीन् वर्धते नैव तान् त्यजेत् ॥ ७ ॥

**राजा**—तर्हि तमेव जेतुं गच्छामः । कः कोऽत्र भोः ।

प्रविश्य दौवारिकः ।

**दौवारिकः**---जयतु जयतु महाराजः । उपसृत्य । आज्ञापयतु भर्ता ।

**राजा**---एवं विज्ञापय सारथिं । मत्तगजतुरंगपदातिनरनृपसहस्रसमेतं सबाणासनं सेनापतिनाधिष्ठितं ससैन्यं सांग्रामिकं मे रथमुपकल्पयेति । तथा कंचुकिनं प्रवेशय ।

**दौवारिकः**---तथेति निष्क्रांतः । ( ततः प्रविशति कंचुकी )

**कंचुकी**---( उपसृत्य ) । जयतु जयतु महाराजः ।

**राजा**---( कंचुकिनं वीक्ष्य ) प्रेक्ष्यंतां प्रमदवनभूमयः ।

**कंचुकी**---( तथेति ) निष्क्रांतः ।

ततः प्रविशति सूतः ।

**सूतः**---राजन् स्वस्ति भवते । सेनापतिस्तुमदकरितुरंगपदातिनरनृपशतसहस्रसंकुलितसैन्येन युक्तो भवदागमनमेव प्रतीक्षते । तथाहि--

सज्जो रथस्ते विजयाभिधेयः संग्रामिको बाणधनुः समेतः ॥
मुहुर्मुहुः शद्धितहेमघंट। स्तं जेतुमायांतु बलाद्भवंतः ॥ ८ ॥

**राजा**---तेन हि गच्छाम तं जेतुं । इति निष्क्रांतः ।

ततः प्रविशति देवी चेटी च ।

**देवी**---सबाष्पं निस्वसति ।

**चेटी**---समास्वसितु समास्वसितु देवी ।

**देवी**---कुत इदानीं समास्वासः । मेऽत्यंतं हृदयं दह्यति ।

**चेटी**---एवं महाराजस्य पत्नी भूत्वा विनष्टधैर्याऽतिमात्रं संतप्यसे । कथय किमर्थं ते हृदयं दह्यति ।

**देवी**---अवहिता तावद्भव । यद्येवं कथयिष्ये ।

**चेटी**---अवहिताऽस्मि कथयतु प्रियसखी ।

**देवी**---अद्य समे भर्ता वीरममरेश्वरं जित्वा जीवन् प्रतिनिवृत्तो भवतीति नवेति संशयः।

**चेटी** ---( आत्मगतं ) ममापि सैव शंका भासते भवतु तावदेनामाश्वासयामि । ( प्रकाशं ) शांतं पापं प्रतिहतममंगलं । सत्यं तं जेष्यति महाराजः ।

**देवी**---कथं ।

**चेटी**—बाणवृष्ट्या तद्रथं तत्सूतं तमपि जित्वाऽगच्छति राजा ।

**देवी**—तस्यकृतेऽत्यंतं शोचति मे मनः । यतः प्रियपुत्रकोऽस्मासु न जनितः वधूशते एकायामर्पीति । अथवा महाराजाय या रोचते तामेवोपमंत्र्य तस्यां तनयो जतोऽपि न रोचतेऽसम्यमिति न सोऽपि रोचतैवा । तथापि एतद्वचनमेव बाधते । पश्य ।

मद्धस्तदत्तं न गृहीतमेतैर्भिक्षार्थमायातजनैर्न वाचः ॥
तिरस्कृतं चातिकठोरया यद्वंध्याजनैर्दत्तामिदं न वाचा ॥ ९ ॥

( नेपथ्ये कलकलः )

**देवी**—( ससंभ्रमं ) हला कुतोऽयं निश्वनः ।

**चेटी**—( नेपथ्यमिमुखमवलोक्य ) अहो अखंड प्रवर्तितबाणवृष्टिपातेन अमरसेनस्य ससैन्यो रथवरः प्रच्छादितः अतः भयंकरखोउत्थितः ।

नेपथ्ये कलकलानंतरं । )

भोभो अमरेश्वरादिभूपाः प्रमत्तबाहुदंडसमरोद्यगाः किमद्यापि स्थीयते भवद्भिः । तथाहि ।

शार्दूलस्त्वं वनचरमृगाः सर्वराजानरास्ते
क्रुद्धे सिंहे विशति गहनं युत्धरूपं नरेश ॥
उन्मत्ताद्भुतिमिरसमरास्सिंहतुंडे पतंतः
शूरो विद्धि त्वमपि पतसि पुष्पसेनाख्यवन्हौ ॥ १० ॥

**चेटी**—एष महाराजः सर्वं रिपुकुलं दग्ध्वा तममरेश्वरमपि दग्ध्वाऽऽगच्छति।

**देवी**—किं मे नाथो रिपुकुलं दग्ध्वाऽऽगच्छति ।

**चेटी**—अथ किं । ( पुनर्नेपथ्ये । )

भो पुष्पसेनप्रभृतयः शृणुध्वं सर्वे ।

मद्बाणमोहितमिमं सचिवं प्रसह्य । पुष्पावतीनगरवासिजनेश भूप ॥
संपातितं भुवि मया नगरं प्रविश्य। उत्थापयन्जनप पाहि भुवं मुदा तं ११

**चेटी**—अनया वार्तया पर्याकुले स्वः ( पुनर्नेपथ्ये । ) भो राजाधिराज पुष्पसेन शरणागतरक्षक शरणागतं मां पाहीति याचे । तथाहि ।

दुष्टानां गर्ववन्हिः शरणगतजनान्पालकः सिंधुपुत्र्या–
स्साक्षाद्वैरी त्वयापि पतिरिव समरे खिन्नतुंडो हि भूत्वा ॥
मां क्षोणेरीश पाहि इति शरणगतस्तं त्यज दीनबंधो

दारिद्र्यं दह्यतेऽतो द्विजकुलदहनं त्वामहंरक्ष मां हि ॥ १२ ॥

अपि च ।

तव गुणमहिमानं वीक्ष्य जानन्नरः क
स्समरनिरतकर्मा स्यादतो वीरमुख्य ॥
कृतनतशिरसं मा मंतुमंतं सुपाहि ।
वदसि तव निदेशो यन्मया धार्यते सः ॥ १३ ॥

**चेटी**—( नेपथ्याभिमुखं वीक्ष्य ) देवि महाराजः शरणगतममरेश्वरं रक्षन् तं हस्ते गृण्हन् तेन सह किमपि भाषमाणसान्नित एवागच्छति इनादीमावां गच्छावः । ( इति निष्क्रांते ) ततः प्रविशति सभार्येणामरेश्वरेण समं सामात्य-पुरःसरो राजा ।

**राजा**—दुष्ट बुद्धे शरणागतममरेश्वरं मोचयाम अथवा मारयाम ।

**दुष्टबुद्धिः**—( स्वगतं ) एष मुक्तश्चेदमरेश्वरः एतत्पश्चादुन्मत्तो मां स्वाधीनं करोति । अहमप्येतस्य राज्ञः पश्चादहमेव भूमिरक्षको भविष्यामीति मे मनोरथः । पार्थिवस्यापि संततिर्नभवतु तावदेनं वक्ष्ये । ( प्रकाशं । ) वध्य एव एषः ।

**राजा**—धिग्दुष्टबुद्धे त्वंते नामसदृशोऽर्थतोऽपि तथैव वदसि ।

**दुष्टबुद्धिः**—( आत्मगतं । ) सत्यमित्थंभूत एवास्मि । किंतु दुष्टबुद्धिरि-त्यहं ज्ञातोऽद्य एव । ( प्रकाशं ) मुच्यतामेवातो यतः पुनरयं युद्धाय त्वामाह्वये-दिति कथितवानस्मि भवते ।

**राजा**—न खल्वयमुन्मत्तो भवतीति यतः पश्चात्तापमुपगतो एषः । अथवा उन्मत्तश्चेदपि उन्मत्तगर्वनाशकोऽहमेव तथाहि ।

प्रमादोन्मत्तशत्रूणां तन्मदस्य विनाशकः ॥
भूयात्तथा महाराजः शरणागतरक्षकः ॥ १४ ॥

**अमरमहिषी**—सम्यगयमाह राजा दुष्टबुद्धिंप्रति । राजन् पुष्पसेन त्वच्छ-रणगतानस्मान् भर्तारं च पाहि । तथाहि ।

मत्पादं शरणागतस्य वसुधाकंठस्तथा द्वेषिणः
स्त्रीव्यूहस्य न शून्य एव भविता शून्या न भूयादिति ॥
ज्ञात्वा मंगलसूत्रया नृपवर पाहीति याचे पतेः
भूमिः पालनकर्मणा पतिममुं स्त्रीणां जनं मादृशं ॥ १५ ॥

**राजा**—जानन् मुंचाम्येनं स्त्रीजनं च । इति तं मुंचन् कथयति ।

अमरसेनकरं प्रतिवार्षिकमवनिमेव च पालय यच्छसे ॥
सविनयं नृपते भवतां प्रजां गमनकर्मणि सक्तमनाः पुरं ॥ १६ ॥

**अमरेशः**—तथा यथा वदसि करोमीति सभार्यो निष्क्रांतः ।

**राजा**—इतस्ततः परिक्रामन् । इदमस्मद्गृहं यावत्प्रविशामीति प्रविश्य । अये शून्यमस्मद्गृहं । कः कोऽत्र भोः ।

प्रविश्य **दौवारिकः**—जयतु जयतु महाराजः । आज्ञापयतु देवः ।

**राजा**—मे भोगिनीमाह्वय क्षुधाऽत्यंतं पीडितः पतिः तस्य कृते अन्नादि गृहीत्वाऽऽगच्छेति ।

**दौवारिकः**—यद्देवाज्ञापयतीति निष्क्रांतः ( ततः प्रविशति राज्ञी चेटी च ) राज्ञिसमीपमागत्य भोजनायोत्तिष्ठत्वार्यपुत्र : । ( राजा तथा करोति । ) राज्ञी हंडे इत आनयत्वत्धस्तगतमन्नं ।

**चेटी**—तथा भवत्विति तत्पुरो न्यस्य राजन् भुज्यतामिदमन्नं ।

**राजा**—( भुक्त्वा सानंदं ) प्रियेऽद्य मे श्रमनाशोऽभूत् । निद्रां करोमीति स्वपाति । ततो उत्थाय प्रातोऽयं कालः । कः कोऽत्र भोः प्रविश्य ।

**दौवारिकः**—राजन्नाज्ञपयतु ।

**राजा**—सेनपतिस्तावदाहूयतां । एवं साचिवं विज्ञापय अद्य पौरकार्यं भवानेवप्रेक्षतां अहमपि मृगयायै गच्छामीति ।

**दौवारिकः**—तथेति ( निष्क्रांतः । ) ततः प्रविशति सेनापतिः ।

**सेनापतिः**—जयतु जयतु राजा ।

**राजा**—किं सेनापते पूर्वगामिनः सर्वे मृगादीन् वने संमील्य तिष्ठंति ।

**सेनापतिः**—अथ किं ।

**राज्ञी**—हंडे चर मृगयायै गच्छत्वार्यपुत्रः वयमपि गृहं गच्छाम इति चेट्या सह निष्क्रांता ।

**राजा**—तेन हि यास्याम इति सेनापतिना सह निष्क्रांतः ।

ततः प्रविशति सभार्यो दुष्टबुद्धिः ।

**दुष्टबुद्धिः**—प्रिये पुरा गौतुममुनेः सेवानिरताय मे तेन वरो दत्तः ।

**प्रिया**—आर्यपुत्र किमिति ।

**पतिः**—सम्राट् त्वमेव भवसीति ।

**प्रिया**—वीर्यार्णवे पुष्पसेने स्थिते कथमेतत्संभाव्यते ।

**पतिः**—अस्य पश्चादिति । अस्य संततिर्न एतत्पश्चादहमेव राज्ञः वधूशतं तथान्यामपि हत्वा भूमिं रक्षामि । तथा तेन एवं कथितं । पश्य ।

नीलसेनतनयाऽधिगम्यते तां समीक्ष्य नृपतिर्व्यलोभयेत् ॥
तत्र दीर्घवसतिस्तदाप्यते तस्य दंडधरकेण तं प्रिये ॥ १७ ॥

**प्रिया**—( सहर्षं ) युज्यते ।

नेपथ्येकलकलः ।

**सचिवः**—एष राजा मृगयां कृत्वाऽऽगच्छति ।

नेपथ्ये कलकलानंतरं ।

भोभो सेनापतिमुख्याः पश्यतैनं हन्यमानं मदगजं । तथाहि ।

स्वजीविते मुंचति संशयं च विकारवद्धद्रुधिरेक्षणास्यः ॥
गर्जन् समायाति ममाभिभूत्वाकरोनिहंता घट भग्नमेनं ॥ १८ ॥

**सचिवः**—तेन हि गच्छाव इति निष्क्रांतौ ।

ततः प्रविशति ससेनापतिपुरःसरो राजा ।

**राजा**—सेनापते स्वकर्मानुष्ठीयतां ।

**सेनापतिः**—यद्देवाज्ञापयतीति निष्क्रांतः ।

**राजा**—( परिजनं विलोक्य ) त्वमपि स्वकर्मनिरतो भव । सोऽपि तथेति निष्क्रांतः । नेपथ्ये अयमहमागतोऽस्मि । प्रविश्य प्रतीहारी ।

**प्रतीहारी**—जयतु जयतु भर्ता । एष शतधन्वनामा भवद्गुरुरुपास्थितः ।

**राजा**—( सादरं ) किं गुरुर्मे शतधन्व आगतः ।

**प्रतीहारी**—अथ किं ।

**राजा**—तेन तं ह्यविलंबितं प्रवेशय ।

**प्रतीहारी**—तथेति निष्क्रांता ।

ततः प्रविशति पालहस्तो गुरुः ।

**गुरुः**—जयतु जयतु महाराजः ।

**राजा**—( वीक्ष्य आसनादुत्थाय ) अभिवादये भवंतं ।

**गुरुः**—जयोऽस्तु ।

**राजा**—उपवेश्यतामासने ।

**गुरुः**—( उपविश्य ) भवानुपविशतु ।

**राजा**—तथेत्युपविष्टः ।

**गुरुः**—अपि कुशलं ते राज्यं ।

**राजा**—सर्वं कुशलं ।

**गुरुः**—अमरेशोऽपि तेऽधीन इति मन्ये ।

**राजा**—सोऽधीनो भवदनुग्रहात् ! सर्वं मे सौख्यमेवददाति किंतु एषा निष्पुत्रता मामत्यंतं पीडयति । तथाहि ।

पितरो मम संधिग्धाः को ददाति कुले जलं ॥
पिंडानि पश्चादेतस्य पुष्पसेनस्य नेति नः ॥ १९ ॥
राज्याधिरोहणं सूनोर्नेक्ष्ये तस्य सुविक्रमं ॥
शत्रून् जित्वा समायातं कदा हर्षितपुलकं ॥ २० ॥

**गुरुः**—अलमत्यंतपुत्रशोकेन ॥

**राजा**—कथं न जायते भवत्सदृशे गुरुवर्ये मे प्रजा ।

**गुरुः**—( करेण नासिकां धृत्वा किंचिद्ध्यात्वा ) राजन् ते प्रजा दरिद्राद्विजकलादरेण जायते इति ।

**राजा**—द्विजादरः कर्तव्य एव ।

**गुरुः**—पुष्पाण्यानयतुं वयमपि गच्छाम इति निष्क्रांतः ।

**राजा**—( सखेदं ) पुत्रहीनस्य मे का गतिर्भवतीति न जाने ( नेपथ्ये अयमहंदरिद्रोऽस्मि ) तथाहि ।

उदधितटतः दृष्टा दृष्टा ह्यतीव सुरूपिणी
मयि च सुनरान्केयं धन्यामयेत्यनुपृच्छति ॥
कुसुमपुरपस्येयं विद्धि यशस्तनयाऽब्रुवन्
त्वहमपि विभो निश्चित्यैनामिदंग्रहमागतः २१ ॥

**राजा**—कः कोऽत्र भो प्रविश्य ।

**दौवारिकः**—एष दरिद्रद्विजकुमारः प्रतिहारभूमिपास्थितः ।

**राजा**—तेन हि अविलंबितं तं प्रवेशय ।

**दौवारिकः**—तथेति नीष्क्रांतः ।

ततः प्रविशति काष्ठभारहस्तो दरिद्राद्विजकुमारः ।

**द्विजः**—जयतु जयतु महाराजः ।

**राजा**—भवंतमभिवादये ।

**द्विजः**—स्वस्ति भवते ।

**राजा**—उपविशत्वासने भवान् ।

**द्विजः**—तत्काष्ठभारं तत्पुरो निधाय उपविशति ।

**राजा**—किमर्थं काष्ठभारः ।

**द्विजः**—तच्च कथयामि श्रूयतां ।

किं दग्धं मनुजा भवद्भिरिति तान् सर्वान्मयि पृच्छति
ऊचुस्ते दहतीति नैव नरपाः प्राप्तोऽस्मि न त्वां विना ॥
अग्न्यास्त्रेण मया वनं रिपुकुलं तत्काष्ठभारस्त्वतो
ज्ञात्वाऽहं भुवि कोपि मे निधनता तत्काष्ठभारं दह ॥ २२ ॥

**राजा**—( अयमतिदरिद्रोऽस्तीति विज्ञाय ) कः कोऽत्र भोः । प्रविश्य

**प्रतीहारी**—आज्ञापयतु देवः ।

**राजा**—कंचुकिनं प्रवेशय ।

**प्रतीहारी**—तथेति निष्क्रांता ।

ततः प्रविशति कंचुकी ।

**कंचुकी**—विजय स्व राजन् । ईक्षिताः प्रमदवनभूमयः ।

**राजा**—भवतु सुवर्णपूर्णो हेमकलशोऽस्मै दीयतां द्विजाय । कंचुकी तथेति निष्क्रम्य हेमकलशं गृहीत्वा पुनः प्रविश्य ।

राजन् अयं हेमकलश इति पुरो निधाय निष्क्रांतः ।

**राजा**—ब्रह्मन् गृह्यतां हेमकलशः ।

**द्विजः**—तं हेमकलशं गृण्हन् ( सहर्षं ) भूपते युक्तं त्वयीदं कर्म ।

नीलसेनसुतया रममाणस्सार्वभौमतनयो भवतीति ॥
त्वत्त एव नृपते ललनाया माशिषं प्रयुयुजे भुवि तस्यां ॥ २३ ॥

साधयामस्तावदिति निष्क्रांतः ।

**राजा**—

एतद्द्विजस्य वचनं सत्यं भवतीति मन्मनो वेत्ति ॥
ऋषि विप्रवाक्य संघः सज्जनपंडितसुसंमतश्चेति ॥ २४ ॥

वयमपि गच्छाम इति निष्क्रांतः ।

इति निष्क्रांताः सर्वे ॥ इति पुष्पसेनतनयराज्याधिरोहणनाटके प्रथमोंकः ॥

---

# अथ द्वितीयोंकः ।



ततः प्रविशति राजा ।

**राजा**—( सचिंतं निश्वस्य ) भोः कष्टमसूनुता । मे प्रजा कथं स्यात् । अथवा लब्धो मया द्विजवरः । तथाहि ।

गुरुर्यथा मे शतधन्वनामा न्यवेदयत्तस्य वचानुसारात् ॥
दरिद्रविप्रादरतो भवेत्ते प्रजेति विप्रेण वरोपि दत्तः ॥ १ ॥

( नेपथ्ये । अयमहमागतोऽस्मि )

**राजा**—नीलसेनेन दत्तास्यात्तनया मे ।

ततः प्रविशति प्रतिकृतिपत्रहस्तो दूतः पटाक्षेपेण ।

**दूतः**—राजन् ते दत्ता दत्ता ।

**राजा**—केन ।

**दूतः**—नीलसेनेन ।

**राजा**—का ।

**दूतः**—तत्तनया ।

**राजा**—( स्वगतं ) दत्ताशब्दोनेन गृहीतः ।

**दूतः**—तेन प्रेषिते प्रतिकृतिपत्रिके च ।

**राजा**—इतः पत्रिकामानय ।

**दूतः**—तां ददाति ।

**राजा**—वाचयति । तथाहि ।

बाळावती हि तनया सुभगा मया ते दत्ताऽधिराजगुणपूर्णकुपालकाय ॥
सामंतचक्रशिरवेष्ठनवर्तिमाला श्रीजुष्टपादसरसीरुहकाननाय ॥ २ ॥

सा गृह्यतां इति तेन लिखितं ।

**दूतः**—तस्याः प्रतिकृतिर पिप्रेषिता ।

**राजा**—सहर्षं इतः प्रतिकृतिमानय ।

**दूतः**—तां ददाति ।

**राजा**—( गृहीत्वा पश्यति ) अहह किमिदंरूपं । स्वगतं ।

एनां रूपमृदूरुपीनसुकुचद्वंदादिभिः शोभितां ।
दृष्ट्वा को भुवि मानवस्त्वुदधिजारूपोऽपि तुच्छीकृतः ॥
वज्रं किं नु पयोधरेण कदलीस्तंभोऽपि काठिन्यके ।
त्वस्यास्त्यागरतो भवेज्जडमतेर्हानौकयुग्मे नहि ॥ ३ ॥

भवतु तावदेनं वक्ष्ये । ( प्रकाशं । ) एषा मे रोचते गृहीता ॥

**दूतः**—तर्हि रथाधिरोहणं क्रियतां ।

**राजा**—कः कोऽत्रभोः प्रविश्यदौवारिकः ।

**दौवारिकः**—जयतु २ राजा ।

**राजा**—मद्वचनादमात्यं दुष्टबुद्धिंब्रूहि । अहं नीलतनयामुपनिमंत्र्य यावदागच्छामि तावत्पौरकार्यमावेक्षतामिति ।

**दौवारिकः**—यद्देवाज्ञापयतीति निष्क्रांतः ।

**राजा**—वयमपि गच्छाम इति । रथमधिरुह्यदूतेनसहनिष्क्रांतः । ततः प्रविशति सभार्यो नीलसेनः ।

**नीलः**—प्रिये सुतापरिणयोद्देशेनदूतस्तस्मै प्रेषितः ।

प्रिया—कस्मै ।

**नीलः**—पुष्पसेनाय । अस्मत्सुतया बालावत्या युक्तवरश्चोपलब्धः ।

**नीलः**—( साशंकं । ) पुत्रिका तस्मै रोचते वा नवा । प्रविश्यपटाक्षेपेण दूतः ।

**दूतः**—रोचते रोचते ।

**राजा**—( दूतमालोक्य । ) कस्मै ।

**दूतः**—पुष्पसेनाय ।

**राजा**—का ।

**दूतः**—भवत्तनया ।

**राजा**—किं संभ्रांतोऽसि ।

**दूतः**—नहि नहि सर्वं कथयामि । पश्य ।

तनयारोचते राजंस्तव मेऽत्यंतमेव च ।
तस्मात्त्वन्नगरं प्राप्तस्त्वद्दर्शमना इति ॥ ४ ॥

**राजा**—भवतु अभिमुखंगत्वा आदरसत्कारपरो भूत्वातेन सहागच्छाम इति ताभ्यां सह निष्क्रांतः ।

ततः प्रविशति कंचुकी आज्ञापितोऽस्मि नीलसेनेन । क्वगता बाळावती दासी साऽन्वेष्यतामिति । इतस्ततः परिक्रामन् । ( आकाशे कर्णं दत्वा । ) किंबवीषि बाळावती विवाहार्थं मंगलसमालंभनानि गृहीत्वाऽऽयातीति । भवतु याहि । अहमपि ब्राह्मणानाव्हयामि । भोभो ब्राह्मणा आगच्छंतु भवंतः । नील-ग्रहं । स स्वतनयापरिणयार्थं भवतोऽऽहूय वो दक्षिणां ददाति । अहमपि विप्रा आगच्छंति निवेदयामीति निष्क्रांतः ।

ततः प्रविशंति चत्वारो भूसुराः । तत्र

**भीमभट्टः**—सर्वे वयमिदानीं नीलग्रहं गच्छाम ।

**द्वितीयः**—भवतु तत्र पाकोऽपक्व एव दृश्यते ।

**तृतीयः**—दास्याः पुत्र किं तेनापक्वेन सुपक्वेन वा ।

**चतुर्थः**—पाटच्चल ह्यः किल कालिंगराजग्रहे पोलिका निष्पक्वा एव । अतोऽस्मदुदरं आमज्वरपीडितं तत्पोलिकाभक्षणेन । इदानीमपि आमपीडा न निष्क्रामति ।

**द्वितीयः**—अष्ट अष्टरूप्यकानेकस्मै एकस्मै ददाति नीलः । तथाहि
दीयते भोजनं राज्ञा नीलसेनेन वाह्यते ॥
अस्मभ्यं दक्षिणा कृष्ण घृतकुल्यो महोत्सवे ॥ ५ ॥

**कृष्णः**—दक्षिणा कियद्दीयते राज्ञा ।

**द्वितीयः**—पुरैव कथितं मया । अष्ट रूप्यकानेकस्मै २ ददाति किं पुनर्दक्षिणा पुनर्दक्षिणा इति जल्पसि ।

**कृष्णः**—पुरा सुमंतुशर्मा विप्रः पंचत्वमागतः । तदैकादशादिदिने भोजनाय । गताः स्मः । तज्जनकोऽस्मभ्यं प्रत्येकशः द्वौ द्वौ रूप्यकौ दीनोप्यदात् । एष तु भूप एव ।

**प्रथमः**—विधवापुत्र अलं तवा मंगलभाषणेन ।

**भीमः**—अनयामंगलभाषया पुष्पसेनो मृयत इति कल्प्यते । मृतोऽपि तत्तनयोजीवयत्येनं ।

**प्रथमः**—दास्याः पुत्राः किमेवं भाषणान्यत्रोदाहरत अयोग्यानि भीमभट्ट त्वमपिअविवेकी पुरुष इव भाससे ।

**तृतीयः**—कृष्णसूपोऽपि लवणहीन एव ।

**प्रथम**:—दास्याः पुत्र पाको न चिकिच्छितव्यः। त्वरय त्वरय गच्छाम। सर्वे तथेति निष्क्रांताः।

ततः प्रविशति जामातृसहितो नीलः।

**नीलः**—बाळावत्या प्रसवादस्मद्गृहे तिष्ठतु भूप भवान्।

**पुष्पसेनः**—नहि नहि गंतव्यमेव स्वनगरं।

**नीलसेनः**—वास्तव्यं अस्मद्गृहे यदा प्रसूता तनया तां गृहीत्वा यात।

**पुष्पसेनः**—तथा वसामि।

**नील**:—तर्हिगच्छाम ग्रहंप्रति भोजनाय।

**उभौ**—तथेति निष्क्रांतौ।

ततः प्रविशति रुदन् शिप्यः।

**शिप्यः**—एष राजा पुष्पसेनो मूर्ख एव। गांधर्वेण तां परिगृह्य तत्क्षणमेव स्वपुरंगंतव्यं। तत्यक्त्का राज्यपालनसुखं तां वीक्ष्य लोभौदत्रवावसत्। इदानीं नवमज्वरग्रस्तः। तस्य कृते सर्वव्याधिधूमकेतुं वैद्यमाव्हयेति नीलसेनेनाज्ञापितोऽहं। भवत्वाव्हयामि। वैद्यमुख्या आगच्छध्वं आगच्छध्वं २ नीलसेनग्रहं प्रति। वैद्यो आगत इति कथयं ामीति निष्क्रांतः।

ततः प्रविशति दीनमुखभार्यया समंनीलः। बाळावतीच। बाळावती। रुदति।

**नीलसेन**:—वत्से किं रोदनेन ते दुर्दैवात्पतिः परलोकमितो गतः।

**तद्भार्या**—भोः कष्टं कष्टं।

**राजा**—कः कोऽत्रभोः।

**प्रविष्यदौवारिकः**—

**दौवारिकः**—आज्ञापयतुभर्ता।

**नीलसेन**:—बुधक मद्वचनादुच्यतां दुष्टबुद्धिः।

**दौवारिकः**—किमिति।

**राजा**—एवंविज्ञापय। दुष्टबुद्धे।

दुर्दैवात्पुष्पसेनस्तव च पितृसमो नीलसेनाख्यपुत्र्या।
भर्ता लोकस्य मातुःर्यमपुरवसतिं निर्गतो दुष्टबुद्धे॥
ज्ञात्वैनां पालय त्वं भुवमधिकमते सिंधुसीमां तथास्या।
आदेशेनैव मातुस्त्वनृपतिरसौ याचते त्वां प्रणम्य॥ ६॥

**दौवारिकः**—यद्देवाज्ञापयतीतिनिष्क्रांतः ।

**बाळावती**—( दक्षिणाक्षिस्पंदनं सूचयित्वा । ) अंमो दक्षिणाक्षिस्पंदनं निमित्तानि कथयति ।

**नीलः**—शांतं पापं शांतं पापं प्रतिहतममंगलं । तदा दक्षिणाक्षिस्फुरणेनैव नाथो मे परलोकंगतः । हा नाथ पुष्पसेन बालावतीलतासंतापनाशक मामेकामनाथां विलपंतीं त्यक्त्वा क्वासि गतः ५ प्रयच्छ मे प्रतिवचनंइति मोहमुपगता ।

**राजा**—वत्से समाश्वसिहि समाश्वसिहि हा पुष्पसेन किं मे कोपयुक्तो यमलोकं गतोऽसि ॥ तथाहि ।

गच्छंतं स्वपुरं मासौरुरुधे चापलो नृपः ।
तस्मात्क्रुद्धो गृहीत्वा तां गंतव्यं चेति किंगतः ॥ ७ ॥

**बाळावती**—( लब्धसंज्ञा ) नाथ किं मह्यं क्रुद्धः परलोकं गतोऽसि ॥ तथाहि ।

अत्यंतं त्वयि मम सार्धवर्तितुडे ।
नाथो भो नृपवर आननाद्गृहीते ॥
तांबूलं प्रसभमयं नृपो ननंद ।
माता नौ शिथलितनीवि प्राप्य यातः ॥ ८ ॥

इति मोहमुपागता । वत्से अलमत्यंतभर्तृपुष्पसेनवियोगदुःखेन ।

**बाळावती**—( लब्धसंज्ञा । )

आलिंगनादि विरहय्य ममांगमंगैः ।
कायेश गुप्तपरिभाषणमाशुत्यक्त्वा ॥
क्रुद्धो यमस्य वसतिं कथमासवांस्त्वं ।
भार्यापि ते ह्यनुपदं प्रतियाति वन्हि ॥ ९ ॥

भवतु चिताप्रवेशेन भर्तारं संगच्छामि । भोः चितां प्रज्वालय कोऽत्र । अहो कोऽपि नाज्ञापरः ।

**नीलः**—वत्से किमनेन साहसेन मा कुरु चित्ताप्रवेशं ।

( नेपथ्ये ) आगताः स्मः ।

**राजा**—कः कोऽत्रभोः । प्रविश्य दौवारिकः ।

**दौवारिकः**—राजन् एते दुष्टबुद्धेरादेशमादाय प्रतिहारभूमिमुपस्थिताः ।

**राजा**—त्वरितं प्रवेशय तान् ।

प्रविश्य दूताः । दौवारिकः निष्कांतः ।

**दूताः**—राजन् स्वस्ति भवते । दुष्टबुद्धिरेवमकथयत् ।

**राजा**—किमिति

**दूताः**—

बाळवती मे महिषीभवेच्चे
तामानयध्वं भवनं हि दूताः ॥
किमन्यथातद्गृहने विबोध्य
दुष्टातमानीय विघातयध्वं ॥ १० ॥

एवं किल तस्याभिप्रायः मातृभक्तिर्नो मुखरयति । अतः अस्माकं माता बाळावती परराष्ट्रं यातु । वयमपि सा तत्र नास्तीति कथयाम ।

**राजा**—भवतु तथा करोमि ।

**दूताः**—वयमपि एतद्वृत्तांतं दुष्टबुद्धिसचिवाय निवेदयिष्याम इति निष्कांताः ।

**राजा**—वत्से एष उन्मत्तो एवं मंत्रयति कथमिदानीं करोषि ।

**बाळावती**—कष्टं कष्टं चिताप्रवेश एव श्रेयान् ।

**राजा**—मा कुरु मा कुरु । तद्दुष्टबुद्धिगर्वनाशकममरेश्वरं शरणं गच्छ-यतः अत्र वससि चेन्मां जित्वा त्वां गृहीत्वा अरण्ये हनिष्यति ।

**माता**—हा कष्टं कष्टं आनवममासादुदरे मे स्थित्वा मया रक्षिता इदानीं स्वजीवनाशभयात्परनृपतिममरेश्वरं गच्छासि किं । वत्से न गच्छ ।

**बाळावती**—तात कथं गच्छामि साक्षान्मातापितरौ विसृज्यामरेश्वरपुरं प्रति ।

**राजा**—वत्से किमेवं चंचलासि । पश्य

तं नत्वा ह्यमराधिपस्य नृपतेः पादे सुते याचनां
शीर्षे न्यस्य कुरुष्व मे वसतितात्वत्रैव भूयादिति ॥
दुष्टान्मां सचिवाच्च पाहि नरपभीतां सुतां ज्ञापयन्
ज्ञात्वा त्वं वचसा तथेतिमनसा रक्षत्यसौ भूपतिः ॥ ११ ॥

**बाळावती**—कथं गच्छामि । माता--आलिंगनं देहि मे । तेऽधुना मुखं कथं द्रक्ष्यामि ।

**माता**—यदा त्वं तनयं प्रसूयते नाभिनंद्यते रिपुकुलं दग्ध्वा तं दुष्टबुद्धिमपि तदा द्रक्ष्यसि ।

**बाळावती**—अहं सुतं प्रसूतऽपिस रिपुकुलं हत्वा तं दुष्टं हनिष्याति वानवा । प्रविश्य पटाक्षेपेण दूतः ।

**दूतः**—सत्यं हनिष्यति हनिष्यति ।

**बाळावती**—कः ।

**दूतः**—दुष्टबुद्धिः ।

**बाळावती**—कं ।

**दूतः**—तं वधूशतं हत्वा त्वां च हनिष्यति ।

**बाळावती**—न हि गच्छामि अमरेश्वरपुरं ।

**दूतः**—अहमपि यामीति निष्क्रांतः ।

**बाळावती**—तातं परिष्वज्य तात गच्छामीदानीं ।

**राजा**—वत्से चर वयं यास्याम इति ताभ्यां सह निष्क्रांतः ।

ततः प्रविशति दुष्टबुद्धिः ।

**दुष्टबुद्धिः**—इतस्ततः परिक्रामन् । अयं पुरा गौतममुनेः वचानुसारात पुष्पसेनो नीलसेनत यामुपतिमंन्त तत्रैव मृतः । अहमपि तां मृगमाणो हंतुं नोपलब्धा । दूतास्तस्मै सत्यभावं कथयेयुः स्यात् अथवा कृतं संदेहेन । नीलसेनपुरे सान स्थिता कुत्र गमनशीला स्यात् भवतु मृगयाम इति निष्क्रांतः ।

ततः प्रविशति सिंहासनस्थोऽमरेश्वरः । सचिवश्च ।

**राजा**—सचिवकोऽपि उन्मत्तः कार्यं न कारयेत् । मरणाय प्रमादः कल्पते ।

**सचिवः**—युक्तमिदं ते वचनं ।

**राजा**—पश्य ।

प्रमादात्कुरुते कर्म मनुजः पातकं सुकृत्
मन्यते तत्फलं पश्चात्प्राप्नोत्येव न संशयः ॥ १२ ॥

**सचिवः**—अथ किं । नेमथ्ये दीनाऽहं प्राप्ताऽस्मि ।

**राजा**—कः कोऽत्रभोः ।

प्रविश्य

**दौवारिकः**—एष नीलतनया बालावती प्राप्ता ।

**राजा**—किं मे मातृसदृशा बाळावती प्राप्ता ।

**दौवारिकः**---अथ किं ।

**राजा**---किमेकाप्राप्ता उत ससैन्या ।

**दौवारिकः**---एकैव प्राप्ता ।

**राजा**---क्षिप्रं तां प्रवेशय ।

**दौवारिकः**---यद्देवाज्ञापयतीति निष्क्रांतः ।

ततः प्रविशति बाळावती दीना ।

**बाळावती**--हा त्रायस्व राजन् राजन् मामितिपादयोः प्रणम्य ।

पिता भूपोऽयंत्वं मम सफलतां दुष्टसचिवा-
त्प्रमादादुन्मत्तो हननिरतोऽत्यंतमधुना ॥

**अमरेशः**---वत्से अलं दुष्टबुद्धिभयेन ।

**बाळावती**---

याच्ना मे नीलो न वसतिरभिभूयात्तुसदने ॥
सुतां ज्ञात्वा पाहि अमरनृपते मामभिगतां ॥ १३ ॥

**अमरेशः**---वत्से अलं तद्भयेन । किंतु दुष्टबुद्धिगर्वनाशक पुष्पसेने स्थिते मत्तः परित्राणं किमिच्छसि ।

**बाळावती**---कुतोऽद्यापि पुष्पसेनः यमलोकं गतः ।

**राजा**---किमेषा वार्ता । हा वीर्यार्णवपुष्पसेन हा शरणगतं मां मे सुवचनानि कथयित्वा रक्षकक्कासि गतः । प्रयच्छ मे प्रतिवचनं । अमरसेन मे प्रतिवार्षिकं बलिमुपहरेति कथितं इदानीं बलिं गृहण राजन् ।

**बाळावती**---अलं पितृशोकेन । तस्मादुन्मत्तो मां मे महिषी भवान्यथा त्वां मारयामि इति वदति ।

**राजा**---सशिरःकंपं । युज्यते अपि पुष्पसेने स्थिते इदृशो दुष्टः कथं स्यात् । तस्य पराक्रमं पश्य ।

आसमुद्रतद्गतो नरपौघस्तस्य पादजलजाहितशीर्षः ॥
याचाति सपुरतोंऽजालिंबंधस्तं ननाम कृपयार्चनकर्मा ॥ १४ ॥

**बाळावती**---सत्यं महाप्रभावो मे भर्ता । इदानीं तस्मान्मां रक्ष ।

**अमरसेनः**--बाळावति रक्षामि मातृसदृशां । किमलीकाश्वासनाभिरत्र ।

दुष्टो यातु विमत्तबाहुबलसंनाशाय दीक्षैः पुरं ।
बाणैस्ते सचिवं यमस्य भवने युद्धेऽतिथिं विद्धि तं ॥

मातस्तद्भयविक्ल्वात्किमिति नो च्छायां करोमीति ते ।
माता मे वस त्वं ग्रहे शठमतिर्नोयाति किं तद्भयात् ॥ १५ ॥ -

भवतु प्रियं मे कथयामि । एनां मे मातरं पुष्पसेनभार्यां बाळावतीं पूज्यभावेन भजस्वेति । मातः चेरम ग्रहं प्रति । वयमपि गच्छाम इति निष्क्रांताः सर्वे । इतिद्वितियोंकः ॥



# अथ तृतीयोंकः ।



ततः प्रविशति दुष्टबुद्धिः ।

**दुष्टबुद्धिः**——बाळावतीं मृगमाणोप्यहं तां न प्राप्तः । भवत्विदानीं किं करोमि सेति तृतीयमासपूर्णा अंतर्वत्नी श्रुतवानस्मि । मयि मृगमाणे तामयनमेकं गतं कुत्र गमनशीला स्यात् ॥ सचिंतं निश्वस्य । आः ज्ञातं । मम दुष्टबुद्धेः प्रवेशस्तस्यामरेश्वरस्य पुरे न स्यादिति तत्र गता भवेत् । तत्पुरमेव गच्छामि । कः कोऽत्रभोः ।

प्रविश्यदौवारिकः ।

**दौवारिकः**——आज्ञापयतुदेवः ।

**दुष्टबुद्धिः**——सेनापतिस्तावदाहूयतां । सारथिं विज्ञापय । ससैन्यं सबाणासनं रथं कल्पय बाळावतीमत्रानयतुं ।

**दौवारिकः**—तथेति निष्क्रांतः ।

**दुष्टबुद्धिः**——अहममरावतीं गत्वापि तत्पुराधिपतिरमरेश्वरस्तां प्रेषयति न वेति संशयः । भवत्वेवं कार्यं । पूर्वं मे मातरं बाळावतीं अमरेश्वरपुरं प्रति प्रेषय । एतच्छ्रुत्वा वचनं तां प्रेषयति चेत् मे मनोरथः पूर्णः । अन्यथा तेनसह प्रयुध्य गहने तामानीय तं जित्वा हनिष्यामि । युद्धे निष्णातो दृष्टश्चेत्सात्वनोपायेन तं विश्वास्य स्वमनोरथं यामि ।

ततः प्रविशति सेनापतिः ।

**सेनापतिः**——जयतु जयतु देवः । उपसृत्य । रथस्ते सज्जः ।

**दुष्टबुद्धिः**——तर्हि गछाम तत्पुरममरावतीनामकं इति तेनसह निष्क्रांतः ।

ततः प्रविशत्यमरेश्वरः सचिवश्च ।

**राजा**——बाळावतीमद्य नापश्यं गृहे ।

**सचिवः**——बाळावती किमपि स्नुषया समं भाषमाणा तिष्ठति ग्रहे भवतां ।

**राजा**——किं मे भार्यया समं भाषमाणा तिष्ठति तिष्ठतु तपश्विनी ।

( नेपथ्ये । ) अयमहमागतोऽस्मि ।

**राजा**—कः कोऽत्रभोः ।

प्रविश्य दौवारिकः ।

**दौवारिकः**—जयतु जयतु महाराजः ।

**राजा**—दूतमालोक्य रेरे कः प्राप्तः ।

**दूतः**—दुष्टबुद्धिः प्राप्तः ।

**राजा**—त्वरितं प्रविशतु दुष्टबुद्धिः ।

**दूतः**—यद्देवाज्ञापयतीति निष्क्रांतः ।

ततः प्रविशति दुष्टबुद्धिरेक एव ।

**दुष्टबुद्धिः**—विजयस्व राजन् ।

**राजा**—इत उपविश ।

**दुष्टबुद्धिः**—अमरेश्वरमातरं मे बाळावतीं प्रेषय । पादयोः प्रणम्य । रुदति तनयो मातर्मातः पितः पित इत्यसौ ।

**अमरसेनः**—एतद्वचनं ते वचस्येव पश्यामि न मनसि ।

**दुष्टबुद्धिः**—अमरनृपते वाण्यां सत्यं मनस्यपि विद्धि तत् ।

**अमरसेनः**—येषां मनसि सत्यभावः स एव वचस्यस्ति ते मनस्विनः । त्वं तु दुरात्मा ।

**दुष्टबुद्धिः**—स्वपुरमभिगम्याशु माता सुतान्परिरक्षतु ।

**अमरसेनः**—ते वचसि न विश्वसामि ।

**दुष्टबुद्धिः**—यमपुरगतं श्रुत्वा शोकेत्यसौ हृदि दह्यति ॥ १ ॥

**अमरसेनः**—अतएव पितृवधशोकाकुलस्त्वं तत्पत्नीं बाळावतीं माहिषीं भवान्यथा मारयामि किमिति वदसि ।

**दुष्टबुद्धिः**—कथमेवं भविष्यति । कर्णौपिधाय । अनेन तेऽयोग्यभाषणने सत्यं कंपितमिव मे हृदयं ।

**अमरसेनः**—न तां प्रेषयामि ।

**दुष्टबुद्धिः**—अमरसेन परस्त्रीं बाळावतीं ग्रहे न्यस्यागम्यां गंतुशीरुस्त्वं कथमधर्मभीरुः ।

**अमरसेनः**—( सरोषं । ) दुष्टबुद्धे अलं भाषणेन ।

श्रीशःसाक्षी न त्वहं विद्धि तत्र ।
एकांते त्वं यत्कृतं क्रीयतेयत् ॥
मिथ्यावा क्यान्नास्ति पापं च साम्यं
मिथ्या वाचो भाषमाणस्त्वमेव ॥ २ ॥

अनेन प्रमादभाषणेन मे त्वं यमपुरं गच्छसीति दृश्यसे ।

**दुष्टबुद्धिः**---त्वां प्रेषयित्वायमपुरं तां गृहीत्वा गच्छामि किं करोषि । युद्धायागच्छ त्वत्पराक्रमं पश्यामि ।

**अमरसेनः**---( विहस्य । ) ते पराक्रमं तदैवापश्यं पुष्पसेनामरसेनयोर्युद्धेप्रवृत्ते सति । तथाहि ।

बाणा मे हृदयं प्रविश्य परतस्ते निर्गतास्तत्र हि ।
मूर्छन् किं त्वकरोः किमत्र मृयसे युध्यामि जल्पन्निति ॥
गच्छ त्वं स्वपुरं दुरात्मपुरुषपृथ्वीमिमां पालयन् ।
तत्पूर्वं स्मरणं करोषि न हि किं बाणासनं सज्जतां ॥ ३ ॥

**दुष्टबुद्धिः**----( स्मृत्वा । स्वगतं । ) सत्यमयं पराक्रमी कथमिदानीं करोमि । गौतुम तदैव कथितं त्वया सम्राट् त्व मेवभवसीति । एतत्पत्तनाधिपतिस्तु तां न मुंचति । न वमासपूर्णगर्भा सा श्वःप्रभाते तनयं प्रसूय पट्टाभिषेकं करोति चेत्वं भंगवरो भविष्यसि । भवतु सांत्वनोपायेन एनमाश्वसयामि । तत्र विप्रलब्धश्चेदयं सत्यं महातपस्वी मान्यो गौतुममुनिरिति मन्ये । ( प्रकाशं । ) अमरसेन परमार्थेन तन्न ज्ञेयं । मां रक्षस्व रक्षस्व इति पादयोः रुदन् पतति । मद्वचस्तत्कथमर्हति त्वयि ।

बाळावतीं प्रेषय भूमिपाल न तां रथे न्यस्य विघातयामि ॥
वीर्यार्णवे मे त्वयि का कथात्र सैन्येन युक्तो नगरं विशामि ॥ ५ ॥

**अमरसेनः**---( स्वगतं । ) अयं यद्ब्रवीति तत्सत्यमेव भासते भवतु तावदेनं वक्ष्ये ।

**दुष्टबुद्धिः**---मुहुःपादयोः लुंठन् ।

मातुःप्रवीक्ष्य वेलां अत्यंतंशोकनिरतलोकश्च ॥
पृच्छंति मांसदा ते माता नःस्वर्दिनेऽयाति ॥ ६ ॥

**अमरसेनः**---( सकरुणं ) भवतु तां प्रेषयामि । तां संभाव्य रक्ष पूज्यभावेन ।

**दुष्टबुद्धिः**---तथा करोमि यथा वदसि किं विशेषेण ।

माता यद्वदतीति तच्चशिरसा संधार्यमाणोऽनिशं ।
पृथ्वींरक्षति दुष्टबुद्धिरिति मां मन्नामके संशयं ॥
कर्तव्यं नृपतेऽर्थतोऽप्ययमिति दुर्बुद्धिरित्येव नो ।
विद्धि त्वं ह्यमरेश मूर्खमनुजो वाचः क्षमस्त्वावदत् ॥ ७ ॥

**अमरेशः**—कः कोऽत्र भोः । प्रविश्यदौवारिकः ।

**दौवारिकः**—जयतु जयतु महाराजः । आज्ञापयतु देवः ।

**राजा**—मातृसदृशां बाळावतीमाव्हय ।

**दुष्टबुद्धिः**—( सहर्षं । ) ( स्वगतं । ) अनेन वचसा मे मनोरथः पूर्णो भवतीति मन्ये ।

ततः प्रविशति स्नुषया समं बाळावती ।

**दौवारिकः**—दैवेनाकारिता एषा । इतिनिष्क्रांतः ।

**बाळावती**—उपसृत्य दीर्घायुर्भवतु पुत्रः ।

**अयरेशः**—मातः वंदे । इत उपविशत्वासने ।

**बाळावती**—किमत्र मामाव्हयो दूतमुखेन । अत्र उपविशामि । दाक्षिणाक्षिस्पंदनं सूचयित्वा । अये मरणकालोऽऽगत इति सूचयतीदं दक्षिणाक्षिस्पंदनं ।

**अमरेशः**—प्रतिहतममंगलं । मातस्तेऽपरो दुष्टबुद्धिनामकः पुत्रस्त्वामाव्हयतीति त्वद्दैवमेव तथारूपस्त्वामाव्हयत् न त दूतः ।

**बाळावती**—शत्रुस्त्वामाव्हयतीति वद ।

**तद्भार्या**—हा कष्टं कष्टं नप्रेषयामि परराष्ट्रं प्रति तां ।

**अमरेशः**—युक्तमयं यद्वदतीति तत् ।

**दुष्टबुद्धिः**—मातः कथमेवं पुत्रं मां शत्रुरितिवदसि ।

**अमरसेनः**—नहि नहि तस्य बुद्धिः परीक्षिता ।

**बाळावती**—

युगपत्समीक्ष्य बुद्धिं मर्त्यानामेकवाक्यनिरतानां ॥
युक्तायुक्ता बुद्धिः जानन्नपि नजानाति दुष्टानां ॥ ८ ॥

**तद्भार्या**—न प्रेषयामि तां । सा स्वनगरं गच्छतिचेद्गुरुजनहीनमिदंग्रहं भविष्यति ।

**अमरेशः**—गच्छतु माता स्वनगरं ।

**बाळावती**—भो नृपदुष्टाः स्वं कर्म यावन्न साधयति तावदेतद्वचनं अन्यथा मदोन्मत्तः कर्मीश्वरमपि न गणयति ।

**राजा**—अयं माता मातेति वदति कथयेवं करिष्यति रथे उपविश्य सैन्येन समं स्वपुरं विश ।

**बाळावती**—गर्भिणी दुष्टयुक्ता कुतः पत्तनप्रवेशं करोमि । पश्य ।

मेषान्विक्रियमाणानां कौटिकस्तत्र संस्थितिं । प्राप्य द्विगुणमूल्यं स तेभ्यो दत्वा हनिष्यति ॥ ८ ॥ वैतंसिक इवायं मां गृहीत्वा वने हनिष्यति ।

**तद्भार्या**—तदैवकथितं दुष्टबुद्धिरागतोऽपि तां मे मातरं न प्रेषयामीति कथमिदानीं गर्भिणीं प्रेषयसि ।

**राजा**—सा गर्भिणी तस्याः दुष्टबुद्धिरयं सौख्यदो भविष्यति । अन्यथा त्वमपि तया सह निर्गच्छ ।

**बाळावती**—ललाटलेखनं को व्यपोहति ईश्वरोऽपि न व्यपोहतित्वं वस मद्यं किमर्थं दुःखं भजसि । वत्स गच्छामीदानीं ।

**राजा**—भवतु गच्छ ।

**बाळावती**—तथेति निष्क्रांतातेन सह ।

**राजा**—वयमपि गच्छाम ग्रहं प्रति । इति भार्यया सह निष्क्रांतः ।

ततः प्रविशति ससेनापतिपुरःसरः । रथमधितिष्ठंती बाळावती दुष्टबुद्धिश्च ।

**सेनापतिः**—मातः गव्यूतिमात्रमस्मत्पुरं वर्तते ।

**दुष्टबुद्धिः**—अत्रैवसेनापते रथादवतारयतां दासीं ।

**बाळावती**—सेनापतेऽयंदुरात्मा तदामातर्मात इत्यवदत् दाशींमामिति ।

**सेनापतिः**—नावतारयामि गहनेऽत्र तां मातरं ।

**दुष्टबुद्धिः**—अहमेवतावदेनामवतारयामि हंतुं किं करोत्युत्तिष्ठति ।

**सेनापतिः**—आगच्छरे आगच्छरे दुष्टबुद्धे तावदेतस्याअंग मपि स्पृष्ट्वा पश्य । हनिष्यामि ।

**दुष्टबुद्धिः**—रेरेधर्मजानन्नपि प्रजानां राज्ञोवचनपालनकर्मास्तीति मां कथमेवं भाषसे ।

**सेनापतिः**—विहस्य पश्यध्वं सैनिकाः धर्मज्ञो दुष्टबुद्धिरयंवर्तते । तादृशानि मंत्रयित्वादुष्टबुद्धिरिदानीं वंचयत्येनां । रेरे दुष्टबुद्धे पश्य ।

मात्रादत्तमिदं दुरात्मसचिवभुंजन्निमांतेभुवं ।
लज्याक्वास्ति नदृश्यते कथयमे भुक्त्वापि तामेवहि ॥
हत्वातन्नगरे नरेशजननीं मेपत्तनं प्रेषय ।
क्वोक्त्वैवं वदसीतिसिंधुवलयां रक्षामिधर्मोगतः ॥ ९ ॥

**दुष्टबुद्धिः**—भोसेनापते तदातथैव वक्तव्यंअधुनेदृशमेव कर्म करोमि ।

**सेनापतिः**—

कर्तव्यमीदृशं कर्मनिश्चित्यैनां प्रभाषसे ॥
धनुर्मेसज्जमायातुबाणैः शीर्षं निवार्यते ॥ १० ॥

**दुष्टबुद्धिः**—सगर्वविहस्य । सेनापतेत्वमेवं जल्पसि स्वप्रजाहननशंकितहृदयः कथं हनिष्यामित्वां ।

**सेनापतिः**—पश्यध्वं पश्यध्वं सैनिकाः साक्षादन्नदांमातरं हंताऽयंप्रजाहननाय शंक्यतेऽस्य हृदयमिति ।

**दुष्टबुद्धिः**—यमसदनं प्रेषयामित्वां ॥ इति सशरंधनुरादत्ते ।

मच्छराहृदयमेवविशंति जीवजीवतव छिंद्यबाणक ॥
मातृभक्तिपरिवर्तितयुद्धवणकान्दहदहेत्युदाहृत् ॥ ११ ॥

**सेनापतिः**—तांबाणवृष्टिं छित्वारे रेवृथावीरोऽहं वीरोऽहमित्यात्तधन्वन् तेशरादग्धा अधुनाकिं करोषि ।

**बालावती**—वत्ससेनापते किंवृथाशस्त्रग्रहणेनालं । अयंदुरात्मात्वां हत्वामामपि हनिष्यतिमद्यं किमर्थंमृयसे । अनुगच्छतमेव ।

वीरस्यसचिवस्याशु कृतांतस्येवरूपिणः ॥
कृपाशून्यस्यपादौ चप्राप्यत्वंहि सुखीभव ॥ १२ ॥

**सेनापतिः**—मातःएवंमावद । मयि जीवतितवांगमपि स्पृशतुदुष्टबुद्धिः । तथाहि ।

मातासुखंयातिहिचेत्सुतश्चसुतोऽपिमाताह्यतुलंप्रकर्षं ॥
नयःसुखीतांप्रतिप्रेषयित्वासकृत्रिमारिर्जननीतनूजः ॥ १३ ॥

तस्यांयदुःखं भुंजत्यांमातरि सेनापति दुःखंभजत्येवकुतः सौख्यं । दुष्ट-

बुद्धिः । रेरेसेनापते वृथाकिमर्थं मातुस्त्यजसिते प्राणान् । इयमतिसुंदरीमहिषी भवतुत्वमपि सुतोभव । सैनिकः । सत्यंमत्तो दुरात्माऽय मित्याह ।

**सेनापतिः**——

महिषीसानतेऽनार्यनमां विद्धिसुतंनृप ॥
जल्पस्येवंमनोवेत्ति आयुर्नश्यतिचास्यहि ॥ १४ ॥

**दुष्टबुद्धिः**—स्वीकृतामिदंशरासनं । इतिधनुर्गृहीत्वा बाणवृष्टिंकरोति । सेनापतिः । अहह हंतअस्यबाणाग्रोमेहृदयं प्रविष्टः मामुद्धरतु । मामुद्धरतु देवइतिभूमौ पतति । सैनिकानांहाहतःसेनापतिरिति हाहाकारमिश्रितोरवउत्थितः ।

**दुष्टबुद्धिः**—सहर्षं । भोसैनिकाः सहृष्टमनसोभवत । एषहतोऽप्यपरं सेनापतिंकरोमि ।

**सैनिकाः**——( स्वगतं । ) दुष्टानामयंकालस्तमोगुणमयोऽस्तीति यत्पूर्वैः कथितंतत्सत्यमेष एव । प्रकाशं । ) भवत्विति नकिंचिदूचुरस्यभयात् । दुष्टबुद्धिः । भोसैनिकास्तामित आनयध्वं । सैनिकाः । अधोमुखाः किमपि नकुर्वंति ।

**दुष्टबुद्धिः**——रेरेसैनिकनश्रृणोषिमेवचनं भवतुवयमेवतावदेनामवतारयाम इत्युत्तिष्ठन्तां रथादवतार्यहस्तमाकर्षति ।

**बाळावती**——रेरेमूर्ख अपसर अपसर दुष्टबुद्धिः ॥ प्रियतमेतमोऽपसरतुनापसराम्यहं तेपक्षपातीसेनापतिर्मृतः त्वांमांविनेदानीं कोऽपि नरक्षतिएतद्विचिंत्य मेमहिषी भूत्वा राजसौख्यंभुंजस्व किमत्रमृयसे वृथा । तथाहि ।

दासीसहस्रंतेऽधीनंराज्यपालनमेवच ॥
चुंबनंदेहिमेकांते ह्यंकमारोहणंकुरु ॥ १५ ॥

**बाळावती**——किमेवंजल्पसि मरणमप्यधुनाश्रेयस्करमेव ॥

**दुष्टबुद्धिः**——

पर्यंकंदिव्यमारुह्याधरं तेपाययप्रिये ॥
पादसंवाहनंतेऽहंकरोमिवशगाभव ॥ १६ ॥
बुद्ध्याविचिंत्य विधिनाप्रथमेति तेकिं ;
सृष्टिःकृताप्रियतमे मनसाविचिंत्य ॥

लक्ष्म्याकृतिंकृतवतो सुरजेष्ठबंधो।
र्मन्येनविस्मयमवाप तनूंविलोक्य ॥ १७ ॥
तस्माद्वृथाकिंमृयसेऽत्र कांते ।
एतेजनास्ते वशगाभवंति ॥
नकोपित्वामत्र हिरक्षतीति
मदंकमारोहसि चेन्नहंति ॥ १८ ॥

**बाळावती**—अनार्ययया तेजिव्हया यामातामातेत्युक्तैयव तांकांतांप्रियेति वदसिमूर्ख अपसर । सैनिकः । दुष्टबुद्धे धर्मनिषिद्धकर्माणं त्वांदेवःकृष्णो नपश्यतीतिजानासि किं ।

**दुष्टबुद्धिः**—मामेवदेवः कृष्णइतिविद्धि । तथाहि ।

स्वकीयजनरक्षन्सो भूपतिश्शत्रुसंघहा ॥
विधवारोहणंकुर्वन्कृष्णः कमललोचनः ॥ १९ ॥
अपिच । पद्मनेत्रोऽहमपिभो भूपतिःक्रियतेऽरिहा ।
स्वकीयजनरक्षंश्च विधवारोहणंनर ॥ २० ॥

इतिबलात्तां कर्षति ।

**बाळावती**—एषमदांधः सन्नेवंमां मंत्रयति । कथमिदानीं करोमितदैवाग्निप्रवेसेन भर्तारमनुगच्छंतींमत्वा तातोरुरोध माकुरुचिताप्रवेशमिति । ततोएतस्यभावमवधार्यापि गर्भिण्या अग्निसेवनंनिषिद्धत्वात् तातवचसाऽमरेशपुरं मागतां सोऽपि रक्षन्एतद्दुष्टहस्ताभ्यांसंप्रेषितवान् । अथवाललाटलेखनमनुसृत्य यद्भवतितद्भवतु । हेहरेरक्षेदानीं । नमः ॥ तेऽस्तु ॥ २१ ॥ पाहिमेश ॥ नारकान्मां ॥ २२ ॥ देहितेपादयोः ॥ भक्तिमेवाशुमे ॥ २३ ॥

**दुष्टबुद्धिः**—कांतेत्वंप्राप्यते चेदहंकउपविशामीति जानासि । सैनिकः । नरके ।

**दुष्टबुद्धिः**—किमहंनरके पतामि । विहस्य । आः कः पातयातिमां ॥ सैनिकः । श्रीकृष्णः ।

**दुष्टबुद्धिः**—किमेवं जल्पसि । कृष्णंयमंच पातयामि ! भवतुकांते शीघ्रंकथय । सत्यभावं । मे महिषीमवसिउत मृयसे ।

**बाळावती**—मूर्खएवंमावद मरणमपिश्रेयस्करं ।

**दुष्टबुद्धिः**—तर्हिहरिस्मृतिं कुरु ।

**बाळावती**—( स्वगतं । )

निंदंतांकुशलामां वासः सद्मनिसौरेः ॥
त्वत्पादंभजतां मेचित्तंमेशरमेव ॥ २४ ॥

**दुष्टबुद्धिः**—पादेन हन्यते

पादाहता साकृपणादुरुकक्ष्या निपातितादुष्टमतेश्च भीमे ॥
वने कथंचित्तदनुकृपाळुश्रीकृष्णपादाब्जयुगेरतेयं ॥ २५ ॥

**दुष्टबुद्धिः**—मे कार्यासिद्धिरभवत् ।

हृदि स्थितोस्तंभयादुरस्तो निर्गत्यगर्भस्तुअलक्षितोऽभूत् ॥
एकेनहस्तेन जनान्समन्तान्सांत्वंविकुर्वन्निवनीलपौत्रः ॥ २६ ॥

आकाशेगीयते ।

वनेऽवतारस्त्वपरोनृसिंहो हिरण्यदैत्यात्सचताडितोऽभूत् ॥
अयंतुदैत्येंद्रदुरात्मनाहि बाळावनीगर्भमयश्चएषः ॥ २७ ॥

**दुष्टबुद्धिः**—अनयाप्रवृत्यानिर्भिन्नं मेहृदयं । सैनिकः । रेरेबुधक एनंहंताजातइतियद्गीयते तत्सत्यं । बुधकः । रेसैनिकसत्यंकिंतु नृसिंहदेवसदृशोऽयमिति कथं युज्यतेयतोनरसिंहस्तत्क्षणे पादाहस्तद्वक्षोव्यदारयत अयंन ।

सैनिकः—तस्मादप्ययं श्लाघ्यतमः पराक्रमी दृश्यते । पश्य ।

देवःसोऽपि महाकृतिं सुररिपोर्वक्षस्थलंदारितुं ।
स्तंभान्निर्गतभीममर्जनयुतो बालोप्ययंदारयन् ॥
यत्नादेवनिकेतने किमुनखैर्नाम्नैवचित्रंनहि ।
कुर्वन्शांतिमसौसतः करतलादम्भाद्वनेदर्शयन् ॥ २८ ॥

**बुधकः**—सर्वसत्यंकिंतु अत्रप्रल्हादः कः । सैनिकः । सेनापतिः ।

**बुधकः**—कथं सेनापतिं तेनहतं जानन्नपिविरराम ।

**सैनिकः**—अस्माकंदेवः पौष्पसेनस्तद्वक्षो भित्वापश्यन् अस्याप्यधुना पापानिपूर्णानि नेतिविरराम । योदेवस्य मातृर्हंतास्तीति विज्ञायमातृर्मेहंतु अस्यपापानि पूर्णानिभवंति ततोएनंहनिष्यामीति तत्याज ।

**दुष्टबुद्धिः**—किमपिजल्पंत्येते । मेशत्रुर्यदि जातश्चेत्कथमलक्षितः ।

पश्यसैनिकरविस्तुमद्भयात् धावतीतिममभासते वद ॥

त्यक्तखः स्नपति सिंधुपाथसि बाणरक्तहृदयोविलज्जितः ॥ २९ ॥

वयंस्वनगरं गत्वाराज्ञोवधूशतं हत्वसुखिनोभवाम । सैनिककिमत्र जल्पनेन । इतोरथमनाय ।

नगरंप्रतिगम्याशुहत्वातस्य वधूशतं ॥
पत्न्यासमंराज्यसौख्यं भुंजन्पुत्रायदीयते ॥ ३० ॥

सर्वेतथास्त्विति रथमानयंति । दुष्टबुद्धिः । गच्छामपुरंप्राति इदानीमिति सैनिकैः सहनिष्क्रांतः । निष्क्रांताः सर्वे ॥ इतितृतीयोंकः ॥



# अथ चतुर्थोंकः ।



ततःप्रविशतिशतधन्वनामा मुनिः ।

**मुनिः**—इतस्ततः परिक्रामन् । सखेदं निश्वस्य । अहंदुर्दैर्वाएकः पुत्रो उत्पन्नोमृतश्च । किंकरोमि । देवार्चनाय पुष्पाण्यानयितुंयामः । किं दुःखेन ॥ ( दक्षिणाक्षिविस्फुरति । ) अये दक्षिणाक्षस्पंदनंमेसुखं यच्छति । किंचिद्गत्वाएतद्वनं पुष्पाणितावदवाचिनोमि । इतिपुष्पावचयं नाटयाति । किंचिद्गत्वा । अयेशिशोरार्तश्वरः श्रूयते । किंचिदार्तस्वराभिमुखंगत्वा । शिशुंदृष्ट्वा । मय्यद्यदेवेन प्रसादः कृतः । पौष्पसेनिरिवायं भाति ॥

पुष्पसेनतनयःकृपार्णवो हस्तजातइवभाति तेजसा ॥
कृष्णपादसरसीरुहाटवीसक्तहृच्चसुतनुर्वनालयः ॥ १ ॥

पार्श्वतः ( विलोक्य । ससंभ्रमं ) कथमियंबाळावती ईदृशामवस्थांप्राप्ता । अथवालंसंदेहेन । इयंगर्भिणी किंचित्कार्यवशाद्वहनंप्राप्ता भवेदत्रश्वापदैर्घातिता सतीपतिता । अयंच गर्भाशयान्निर्गतः भवत्वेनंगृहीत्वा रक्षामीतितं गृण्हाति । गृहीत्वातत्करंविलोक्य पुष्पसनतनयोऽयमिति किमत्रसंदेहेन । तथाहि ।

शंखचक्रकजछत्रचामरचित्रमत्तगजवाजिसंयुतः ॥
सिंधुतीरवलयांकितांभुव हस्तएवपृथुकस्यरक्षति ॥ २ ॥

( विचिंत्य । आः ज्ञातं । ) पुरैकादशीदिनेगहनेऽत्रानीय दुष्टबुद्धिर्बाळावतीमहन्यत्तद्वधूशतमपीति श्रुतवानास्मि । तेनैवदुरात्मनेदंकर्मकृतं स्यात् । भवत्वेनंरक्षामीति स्वग्रहंगच्छंति । ग्रहसमीपमागत्य । अयेप्रिये शीघ्रमागच्छ २ ततः प्रविशतितद्भार्या ।

**भार्या**----आर्यपुत्रइयमस्मि । आज्ञापयत्वार्यपुत्रः

**मुनिः**---प्रियेऽद्यहारिणाऽनुग्रहःकृतः ।

**प्रिया**—कोऽनुग्रहःमत्पुत्रमरणमेववा । मुनिः । तत्पुत्रशोकं विस्मर । एनंपश्यबालकमिति तस्करेन्यस्यति । पश्य ।

प्रियेऽद्यपुत्रो मयिविद्धिएनं प्रेम्णातनूजंसुतरां सुपाहि ॥
तत्कामस्वादूदकपूरितौचकुचौ सदापाययबालमस्य ॥ ३ ॥

**प्रिया**—भवत्वेनंपालयामि । कस्यसूनुरयं कस्थितः ।

**मुनि**—( सपरिहासं । ) ममायंसूनुः पुनः कस्यवर्तते ।

**प्रिया**—सत्यंकथयत्वार्यपुत्रः मुनिः । त्वमेवजानासि चेद्विध्यैनंनोच्यते

**प्रिया**—

आकारमाकृतिंरूपमवलोक्यास्य वीर्यतः ॥
उत्पन्नःपुष्पसेनस्य महिष्यामितिकश्यते ॥ ४ ॥

**मुनिः**—साधुसाधुसम्यग्ज्ञानं तव । तस्यैवायंपुत्रः सत्यं । एनंपालय । प्रिया । पालयाम्येनमिति निष्क्रांता ।

**मुनिः**—वयमपिगच्छामइतिनिष्क्रांतः । ततःप्रविशतिराक्षसीराक्षसश्च ।

**राक्षसः**—प्रियेक गच्छाव ।

**राक्षसी**—रुधिरप्रियतांअटवीं यत्रबाळावर्तामृतासेनापतिश्चमृतस्तयोः शोणितंपातुं । राक्षसः । ससंभ्रमं । प्रियेनपातव्यं प्रियेनपातव्यं मातुः क्षतजं । तथाहि ।

बाळावत्या जगन्मातुस्तस्य सेनापतेरपि ॥
रक्तंनपिबहे कांते इद्दशीच्छांनकारयत् ॥ ५ ॥

**राक्षसी**—नहि नहि तस्यारक्तंपिबाम्येव । राक्षसः । ( सक्रोधं । ) अनभिज्ञेकुतस्ते दुष्टबुद्धिरगता ।

**राक्षसी**—जन्मतः । राक्षसः । सादुष्टबुद्धिर्नश्यतु ।

**राक्षसी**—कथं नश्यत्यधुनायदा पुष्पसेनतनयोऽत्रागत्यसर्वेषां दुष्टबुद्धिघातयतितदामे दुष्टबुद्धिर्नश्यति । तथाहि ।

दुष्टबुद्धिविनाशाय दीक्षितोनः पतिर्नृपः ॥
इदंस्वपुरमागत्य दुष्टबुद्धिंहनिष्यति ॥ ६ ॥

( नेपथ्ये । ) कःपुरमिदमागत्य मयिजीवतिमज्जनकं दुष्टबुद्धिंहनिष्याति ।

**राक्षसः**—( ससंभ्रमं । ) नेपथ्याभिमुखवलोक्य प्रियेत्वंकिमपिजल्पासि । एषदुष्टोदुष्टबुद्धिं हनिष्यतीतिश्रृण्वन्क्रुद्धस्तत्तनयोऽत्रागत्य त्वांहनिष्यति कथं करोषीदानीं ।

**राक्षसी—** यदुक्तंतत्सत्यमेवकिमर्थं मांहनिष्यति । पुनरपितदेवपठामि । किं करोतिकरोत्विति तदेवपठति । दुष्टबुद्धिविनाशायेति ।

ततःप्रविशतितामसनामको दुष्टबुद्धितनयःक्रुद्धः ।

**तामसः**—कः पुरमिदमिति पूर्वोक्तंपठति । विधवेकिमेवं जल्पसिनयुक्तमत्वैवंजल्पनं । उभौ । भीतौ ।

**तामसः**—द्वावपिकदानएवं वक्तव्यं ।

**राक्षसी**—युक्तमेवोक्तंमया । दुष्टबुद्धिः सर्वेषांनाशायदीक्षितो नोऽस्मत्कंपतिः प्रभुर्दुष्टबुद्धिर्बहिर्देशादागत्येदं पुरंहनिष्यतीत्युक्तंभवताऽन्यथैव ज्ञातं किं करोमि।

**तामसः**—एवंवा । राक्षसी । अथकिं ।

**तामसः**—एवंभवत्विितिनिष्क्रांतः ।

**राक्षसः**—प्रियेनवक्तव्यं ईदृशंवचनं ।

**राक्षसी**—एषकिंकरोतिएनं तज्जनकं हंतापुष्पसेनसूनुर्वर्धते । तथाहि ।

शतधन्वसन्मुनिमहाभवनेरतःसोहत्वा रणेरिपुममुं सुतमस्यवीरः ॥
निष्कंटकांभुवमिमां प्रतिपालयन्स्वान्रक्षत्यतो सुखविशिष्टप्रजाभवंति ॥ ७ ॥

कदाश्रुतमिदं वृत्तांतं ।

**राक्षसी**—यदा आकाशवाणीएनं दुष्टबुद्धिंहंताजात इत्यभवत् । तदैवश्रुतं । अतशीघ्रमेनंहनिष्यति एतद्रुधिरमेवपिबामः । इतिनिष्क्रांतौ ।

ततः प्रविशति शतधन्वशिष्यः ।

**शिष्यः**—विद्याशिक्षणवेलागता । अधुनागत्वापिविद्यामुपदिशति वानवा । अहमपिकिंकरोमि ह्यःस्वसुतनामकरणं चकारसगुरुः । रेरेशिष्य रामभट्टमाव्हयकृष्टभट्टमाव्हयेति निद्राभंगएवमेऽभूत् । अधुनाकिंचान्निद्रांपासेमयिवेलाऽतिक्रांता। साशिशुरपि रूपवान् राजलक्षणयुतः । शतधन्वगुरुरपि एवंमत्वाशिशुं शांतहृदयोऽयमिति नाम्नाऽऽव्हयत् । किमिति ।

असौबालोऽत्यंतं शठमतिपदाताडितनुः ।
पुराऽभूच्छांतोयं शठमतिशरैर्घातितसुतं ॥
उत्सेनामुख्यंशठमतिरिपोःपापभरितं ।
हृदिज्ञात्वानामप्रशमहृदयश्चास्यकृतवान् ॥ ८ ॥

भवतुतत्रवृहमेव गच्छामीतिनिष्क्रांतः ।

ततःप्रविशतिशतधन्वमुनिःपश्चात्सस्सुतः शिष्यश्च ।

**मुनिः**—सुतमालोक्य । पुत्रक इतएहि । बालः । समीपमागत्य पादयोः पतति ।

**मुनिः**—तन्मूर्ध्निकरंन्यस्य । ( चिरंजीव सम्राड्भव । पुनःसप्रेम । ) शिशुंतंगृहीत्वांऽऽकेऽऽरोप्य बालषट्शास्त्राण्युल्लंघितानि ।

**बालः**—उल्लंघितःशट्शास्त्रमहार्णवो भवदनुग्रहात् ।

**मुनिः**—गाढमालिंग्य । पुत्रक अधुना किमिच्छासि ।

**बालः**—बाणविद्यां । मुनिः । अहो प्रकृतिर्दुस्त्यजेति सत्यं । भवतु बाल अस्त्रविद्यामुपादिशामि ।

**शिष्यः**—ज्ञानसमुद्रइवायंबालः । तथाहि ।

रहसिजनसमूहवाक्यदृष्ट्यादिपीडा ।
भवति नसगुरुर्नो ज्ञानसिंधुंमयैनं ॥
उपदिशतियथैषतत्क्षणं लब्धविद्यो ।
भवति सह अहंनविस्मितोमां विलोक्य ॥ ९ ॥

**गुरुः**—रेरेशिष्यवनं गत्वाकीचकमानीयधनुः कृत्वास्मैदेहि ।

**शिष्यः**—गुरोभवतु तथाकरोमीतिइतस्ततः परिक्रामन् । ( स्वगतं । ) गुरोरस्य पीडामिवऽहीवर्तते तदानयइदमानयेति । तथापिगुरोर्वचनं नोल्लंघयेत् । ( प्रकाशं । ) गुरोतथाकरोमीति निष्क्रांतः ।

**मुनिः**—बालधनुगृहीत्वा क्वगच्छसि ।

**बालः**—मृगययैजगांतियये दुष्टबुद्धयस्तान्हंतुंगच्छामि । तथाहि ।

तातेशयेभुविमदांधारिपुश्च दुष्टोयोवर्धतेयमरतंधनुषा करोमि ॥
तंतरणेस्वजनरक्षणमेव कृत्वात्वांनंदयामिजननीं पितरंहिविद्धि ॥ १० ॥

**मुनिः**—बालभवत्वैनामुत्तरां दिशंविनागच्छ । बालः । तथेतितातेनसहनिष्क्रांतः ।

ततः प्रविशति दुष्टबुद्धिः ।

**दुष्टबुद्धिः**—इदानींनिष्कंटका भूरासीत् । वधूंशतंहतं तथा बाळावतीहतासुखं भुज्यतेमयेदानीं ।

ततः प्रविशतिकमला ।

**कमला**—जयतु जयतु तातः ।

**दुष्टबुद्धिः**—विलोक्यसुता प्राप्ता । वत्सेऽद्यदुर्निमित्तानि बहून्यासन् । सुता । किंकिमासीत् ।

**दुष्टबुद्धिः**—शृणु ।

यदा बाहेर्देशमुपागतोऽहं तदैववामाक्षिभुजश्च वामः ॥
वत्सेऽस्फुरद्दाक्षेणतो बिडालोयातस्ततो राज्यमिदंहियाति ॥ ११ ॥

**कमला**—शांतंपापं शांतंपापं प्रतिहतममंगलं । तावतेराज्यामिदं स्थिरंकर्तुं मयावरोलब्धः ।

**दुष्टबुद्धिः**—कस्मात् । सुता । इंद्रात् ।

**दुष्टबुद्धिः**—किमिति ।

**सुता**—जेतुमशक्याविति ।

**दुष्टबुद्धिः**—कौ ।

**सुता**—पयोधरौ । दुष्टबुद्धिः । सर्वविस्तराद्ब्रूहि ।

**सुता**—सर्वं कथयामि । यदात्वंबाळावर्ती तवधूशतंहत्वा राज्यपालनासक्तस्तदाऽहंतातराज्यंस्थिरभवंत्विति इंद्रसेवानिरता ।

**दुष्टबुद्धिः**—( सहर्षं । ) ततस्ततः । सुता । ततोनिरंतरसेवासक्तां मां विलोक्येंद्रः प्रादुरासीत् ।

**दुष्टबुद्धिः**—ततस्ततः ।

सुता । ततस्त्वच्छेवया संतुष्टोऽस्मिवरंवृणीष्वेति बभाषे ।

**दुष्टबुद्धिः**—ततस्ततः । सुता । ततोऽहंदीनवाचा देवेंद्रमत्तातस्य स्थिरराज्यंयथाभवति तथामेवरं देहीत्ययाचं ।

**दुष्टबुद्धिः**—ततस्ततः । सुता । ततः संतुष्टमनसेंद्रेण सुभगे एतौमेघौ केनापिजेतुमशक्यौ । ग्रहाणैताभ्यां तेजनकस्यस्थिरराज्यं भवत्वितिमेवरोदत्तः ।

**दुष्टबुद्धिः**—ततस्ततः । सुता । जगतिमे कोप्येतौजेष्यति चेत्कथमित्यपृच्छंतस्मै ।

**दुष्टबुद्धिः**—साधु २ पृष्टंत्वया । ततस्ततः ।

सुता । ततोदेवेंद्रोएमयौनौ जेतानास्त्येवयः पयोधरावेतौ जेष्यतिसएवत्वत्पयोधरावपि जित्वासबंधुंतेतातंच स्थिरराज्यंभुंक्तेइति ।

**दुष्टबुद्धिः**—ससंभ्रमं । मेराज्यं परःस्वाधीनंभवति किं स्थिरं न ।

**सुता**—नहि २ तेनएवं कथितं । पश्य ।

दत्तंतेसुभगेपयोधरयुगं जेतामहीपालक ।
स्त्वत्तातस्य विराज्यमिंद्रपदवीं राज्यंनरोयस्स्थिरं ॥
भुंक्तेविद्धिविपीनकौ कुचघटौगृण्हन्नृपतिस्त्वामिति ।
सोवीरस्तवतस्य भक्तिवशतस्तस्मै प्रयच्छेत्परं ॥ १२ ॥

**दुष्टबुद्धिः**—साधु २ वत्से सुवरोलब्धोइंद्रादपि । भवतु स्वगृहंगच्छ ।

**सुता**—तथाभवत्विति निष्क्रांता ।

**दुष्टबुद्धिः**—अधुनाचिंतापिकमलावतीभाषणेन दूरगामे । भवतुभूमिं पालयामि । इतिनिष्क्रांतः ।

ततः प्रविशति शतधन्वमुनिः ।

**मुनिः**—अद्यबालोमृगयायै गतोनायातः । दिशंकांगतः स्यात् ।

( नेपथ्ये ) बालशांतहृदयतेहस्तगतौ सिंहगजौसृज । मुनिःश्रुत्वा । नेपथ्याभिमुखमवलोक्य । अयेमद्भार्यया निवार्यमाणोऽऽगतः सूनुः । तथाहि ।

करतलधृतमत्तकेसरींद्रस्त्वरिततरं जननीनिवार्यमाणः ॥
शरणगतगजेंद्रमृत्युनाशक्तिपटुवामकराग्रभीमहास्तिः ॥ १३ ॥

ततः प्रविशति जनन्यातौ सृजसृजोतिनिवार्यमाणस्तयासह शांतहृदयः ।

**माता**—वत्सशांतहृदयतौ सृजान्यथात्वां तौहानिष्यतः ।

**मुनिः**—ससंभ्रमं । बालवस्त्वपरं दीयतेविहर्तुं तौत्यज । बालः एनंमृगेंद्रंहत्वा-गजं त्यजामि । यन्निरपराधिनंगजं मृगेंद्रोहानिष्यति । तदयमविचारीकिमनेन ।

**मुनिः**—वत्सत्वंशांतहृदयेति कृतनामधेयोऽस्येतत्कथं युज्यतेत्वयि । बालः । दंडसमये तीक्ष्णएवभवितव्यं ।

**मुनिः**—वत्समुंचासिंहं ।

**बालः**—सिंहजृंभस्वदंतान् पश्यामि । नचेत्त्वां ताडयामि ।

**मुनिः**—नयुक्तमस्य हननं । माता । वत्समुंचैनं ।

**मुनिः** । यद्ययंमुनिपुत्रश्चेन्मुंचत्येनं रोजपुत्राऽयं कथंमुंचति । वत्समुंच मृगेंद्रगजौच ।

**बालः**—सिंह कदापिनैवं कार्यंगच्छेतितं बलात्क्षिपति । गजेंद्रंमुंचति ।

**मुनिः**—वत्सउत्तरांदिशंविनागच्छ । भवत्वधुनाभोजनाय चर । इति ताभ्यांसह निष्क्रांतः ।

ततः प्रविशतिदुष्टबुद्धिः ।

**दुष्टबुद्धिः**—इतस्ततः परिक्रामन् । कःकोऽत्र भोः ।

**प्रविश्यदौवारिकः**—दौवारिकः । जयतु २ देवः ।

**दुष्टबुद्धिः**—( सगर्वं । ) रेरेपुरुषकोऽपि दुष्टबुद्धिरर्थतोऽप्यस्तीत्याह किं ।

**दौवारिकः**—नोच्यते तथाकेनापि ।

**दुष्टबुद्धिः**—मेराष्ट्रेकोऽप्यपघातं न करोतिवा ।

( नेपथ्ये । ) करोत्येव ।

**दुष्टबुद्धिः**—नेपथ्याभिमुखमवलोक्य । कर्णंदत्वा । कः ।

नेपथ्ये । एषदुष्टबुद्धिः ।

**दुष्टबुद्धिः**—आः किमेवंजल्पसि ।

ततः पटाक्षेपेणसैनिकः ससंभ्रमः प्रविशति ।

**दुष्टबुद्धिः**—सैनिकंविलोक्यं । किंरेकिंजल्पसि ।

**सैनिकः** । देवकथयामि श्रूयतां ।

मदोन्मत्तोऽत्यंतंशठमतिरसौ हंतिमनुजान् ।
हतंदुष्टेनाशुहननिरतः कोनुभवति ॥
अनेनस्त्रीणांचशतमिदममुं मेरणमुखे ।
मुनेः पुत्रेणैषहतइति विनाविद्धिजननीं ॥ १४ ॥

**दुष्टबुद्धिः**—आः ममांतकोमुनिपुत्रो भवतिकिं ।

**सैनिकः**—नहि २ गजमेनंमत्तं त्वांविनाकोऽपि नहंतीत्युक्तंमुनेः पुत्रोपि भवताविपरीतमेवसंभावितं ।

**दुष्टबुद्धिः**—एवंवा । तर्हिकिमेवंहंत्ययंहंत्ययं मामितिजल्पसि ।

**सैनिकः**—वीर्याणवेत्वयिमे कस्माद्भयंन । भवद्भिस्तन्मदनाशः क्रियतां ।

**दुष्टबुद्धिः**—चरवयमपितन्मदनाशाय गच्छामइतिनिष्क्रम्य पुनःप्रविशति ससैन्योदुष्टबुद्धिः पश्चाद्गर्जन्मत्तोगजश्च ।

**दुष्टबुद्धिः**—मयाप्यसौसैनिकनहन्यते किंकरोमिभवतूर्ध्वदेशे स्थित्वातावदेनंपश्यामि । इत्यूर्ध्वदेशमुपाश्रितः ।

ततः प्रविशति । ब्रह्मचारीशतधन्वपुत्रोधनुर्भृच्छांतहृदयः ।

**शांतहृदयः**—अद्यमृगयायै एतद्दिशंविनागच्छामाकिं एतद्दिशं गच्छाम । यतस्तातोमेकथितवान् एतद्दिशमुत्तरां विनाशगच्छेति । शिशुमेनंघ्नंतीति

स्वापदाअभिप्रायेणनयाहीति कथितवान् । तदाप्रभृत्येवयदाहंबाणविद्यामुपादि-शसि चेद्गृह्यतेमयेत्युक्तवान् तदानवमवर्षी तदैवमयाउपनयनंस्वीकृतं । इदानी-मेकविंशतिवार्षिकोऽहं । तदस्तु । एतद्दिशमेव गच्छामि । किंचिद्गत्वा । अयेक्रूरतमामिदमरण्यं तथाहि ।

मत्तसिंहगजवाजिवानरव्याघ्रदुष्टमतियुक्तसंयुतं ॥

हास्यकर्मगजशक्तिसूकरस्वावृकागतनरांतकायुतं ॥ १५ ॥

ईदृशमिदंवनंअतएवकथितवान् मत्तातोएतादिशांविना गच्छेति । भवतु बाणैर्मयैतेहानिष्यंते । इतिसशरंधनुरादत्ते । ( सिंहादयोएनंशांतहृदयं जिघां-सयाऽऽगच्छंति ।

**शांतहृदयः**—बाणैस्तान्हन्यते । बलिष्ठसिंहोधावन् आगतः ।

**शांतहृदयः**—

एषोऽपिसिंहोमुनिरेव साक्षात्स्वकांतितुच्छीकृतभानुहस्तः ॥

तथापिएतद्धननेन पापंनायाति मांहंतिनिरुद्यमश्चेत् ॥ १६ ॥

( इतिबाणवृष्टिंकरोति । ) सिंहोपितान्बाणान्तुंडे परिगृह्यसमीपमागत्य शांतहृदययज्ञोपवीतंगृण्हाति ।

**शांतहृदयः**—यज्ञोपवीतंतृटित्वा तमेकशरेण हंति ।

शराहतः सिंहवपुः सशीघ्रं मुत्क्वाक्षणोदिव्यवपुश्चगृण्हन् ॥

मुनिर्बभूवाखिलदोषमुक्तो एनंबभाषेमुनिपुत्रमेवं ॥ १७ ॥

मुनिपुत्रवरंवृणीष्व प्रसन्नोऽस्मित्वया पापन्मुक्तोऽहं ।

**शांतहृदयः**—तंन्नत्वाभवान् कः ।

मुनिः । मेपूर्ववृत्तांतं श्रृणु । चित्रनेमिनामकोऽहंराजा कदाचिन्मृगयोद्दे-शेनभ्रमंस्तत्रतत्र मृगानुसारीकस्यचिन्मुनिनिकटेंऽतर्हितो मृगइतितंमुनिमवलेपभरा दुर्भाषणान्युक्तानि तच्छ्रुत्वामुनिःक्रुद्धःसन्मांशशाप । तथाहि ।

रेरेदुष्टमदांधाकिंममुधादुर्भाषणं व्याहरन् ।

राजासन्नपिहंतुमिच्छसि मृगात्सिंहस्त्वमेहीतिमां ॥

स्वामिन्पाहिसहस्वमे मुनिवरअज्ञानमूलादिदं ।

चोक्तंतत्तदनुस्वशापनिवृत्तिंमां प्रत्यवादीन्मुनिः ॥ १८ ॥

यदापुष्पसेनतनयः शांतहृदयस्त्वांशरैस्ताडयतितदामुक्तो भूत्वाराजर्षिभविष्यासि । तस्मान्मुक्तोऽहं ।

**शांतहृदयः**—यज्ञोपवीतंमेकिमर्थंतृटितं ।

**राजर्षिः**—तच्चकथ्यते ।

तृटितंचब्रह्मसूत्रं तवविवाहकर्मभवतीति ॥
अतःकृताहिविधिरिति गोदाननामकापुत्रस्त्वस्तीति ॥ १९ ॥

भवतुगच्छाम तंमुनिंप्रति । इतिनिष्क्रांतः ।

**शांतहृदयः**—सदृष्टिक्षेपं । अहोऽत्रकिंघोषः श्रूयते । समीपंगच्छामि इतिपरिक्रामति ।

**सैनिकः**—भो इतआगच्छध्वं । गजःखलु मदोन्मत्तः ।

**दुष्टबुद्धिः**—बहिःपीडाबहिरेव निष्क्रामतु ।

**शांतहृदयः**—श्रुत्वागजसमीपमागत्य ।

अयंखलुगजो महाप्रलयमेघधारासमं ।
विघोषमनुकुर्वतिमदजलंविमुंचन्दिशः ॥
दुरात्ममनुजानसौसपदिहंतिमत्तोप्यतो ।
इदंहिनगरंदयापरवशंमयाज्ञायते ॥ २० ॥

भवतु उन्नतभूमिस्थमनुसरामि । इतिदुष्टबुद्धिनिकटमागच्छति ।

**दुष्टबुद्धिः**—कोऽयंस्यात् । भवतुपृच्छामि तावदेनं । कस्त्वं ।

**शांतहृदयः**—हंता । दुष्टबुद्धिः । कान्नरान् ।

**शांतहृदयः**—दुष्टबुद्धीन् ।

**दुष्टबुद्धिः**—विद्याकाते ।

**शांतहृदयः**—शस्त्रविद्येतिविद्धि ।

**दुष्टबुद्धिः**—पुत्रःकस्य ।

**शांतहृदयः**—मांमहर्षेःसुतश्च । दुष्टबुद्धिः । व्यर्थाविद्ये ।

**शांतहृदयः**—त्वास्तिशस्त्रंगृहाण ॥ २१ ॥

**दुष्टबुद्धिः**—एनंमारयासिचेत्तवशस्त्रग्रहणं सफलं ।

**शांतहृदयः**—गजमेनंहंतात्रकोनास्ति तवापितन्मरणं असाध्वंवा ।

**दुष्टबुद्धिः**—वयंनिर्बलाएव । अलंपराक्रमं दर्शय ।

**शांतहृदयः**—धनुन्र्यस्य ।

कृतांतरूपोप्यकृतांतरूपो बलेनहीनोप्यतिशक्तिमान्सः ॥
निष्क्रुद्धदेहोप्यति क्रुद्धदेहः समीपमागान्मदमत्तहस्ति ॥ २२ ॥

शुंडांप्रगृह्यकराग्रेणतंभ्रामयन्कृतांतवसतिंप्रेषयामास ।

**दुष्टबुद्धिः**—( सविस्मयं । ) ( आत्मगतं । ) अयंपराक्रमीमयाहंतुमसाध्योदृश्यते । अस्यमरणोपायः कथमपिकर्तव्य एव । भवतुतावदेनंवक्ष्ये । ( प्रकाशं । ) शांतहृदयतेपाराक्रमेण प्रीतोस्मि । सांप्रतंमेपुत्र्यैपत्रनयनंकर्म क्रियतेवा ।

**शांतहृदयः**—क्रियत इतिपत्रमादत्ते ।

**दुष्टबुद्धिः**—रेरेसौनिकएतस्यमत्पुत्र्याग्रहं प्रदर्श्यशीघ्रमागच्छ ।

**सैनिकः**—अथकिं । दुष्टबुद्धिः । वयमपिगच्छामइति ससैन्योनिष्क्रांतः ।

**शांतहृदयः**—सैनिकइयंरम्यापुरीकस्य ।

**सैनिकः**—इयंपुष्पावतीपुरी । पुष्पसेनइति तेपित्रापालिता त्वत्पिताविषमज्वरपीडितो यमलोकंगतः । तदनंतरमासौ दुष्टबुद्धिःमातरंमातृशतं हत्वाराज्यपालनसक्तस्त्वामिदानीं जिघांसयास्वपुत्र्यैपत्रंप्रेषितं स्यात् । तत्त्वंतंहत्वाराज्यपालनंकर्तव्यं ।

**शांतहृदयः**—एवंवा । किंचिद्गत्वाचूतसंघं दृष्ट्वा । अयेसैनिककस्येदं आम्रवृक्षसमीपस्थं ग्रहं ।

**सैनिकः**—तस्याः कमलायाग्रहमिदं ।

**शांतहृदयः**—अत्यानंदस्थानं । तथाहि ।

भ्रमरस्यातप्रवेशश्च कथमेवंभविष्याति ॥
बाहुल्यमधुसंपातुमेकोप्यत्र नदृश्यते ॥ २३ ॥

ततः प्रविशातिकमलाचेटीच ।

**कमला**—हंजेविशालप्रकाशोऽत्रमेंऽगेऽ ऽनंदकारीमीनध्वजविपाठानुत्पादयन् जालमार्गादपतत् । पश्यपश्य ।

**शांतहृदयः**—ग्रहमवलोक्य ।

मरकतमयशुद्धकांतिरम्याकृतिमहिलाजनदृश्यबिंबयुक्तं ॥
ग्रहमिदमवलोक्यमीनकेतुः शरहतकायमहोकरोतिमांहि ॥ २४ ॥

**कमला**—सखिपश्यावतावदेतत्प्रकाशं कस्यभवेदितिबहिरागत्य शांतहृदयंपश्यति ।

**शांतहृदयः**—

किमियंसुरसंदरीबभवेदथवा सूक्ष्मकटीविशोभिता ॥
भ्रुकुटीस्फुरणेनमे त्विंतिमदनंवृद्धतमंविकुर्वती ॥ २५ ॥

**सैनिकः**—पुरासोमदत्ततनयां कालिंगराजोऽपहरन्तयामहचक्रीडे । तथाभूतांगार्भिणींसोमदत्तसुतः कुलकलंकामितिजिघांसयागहनेऽऽनीयतां जघान । तत्सुताएषा ।

**शांतहृदयः**—अस्यदुष्टबुद्धेः कथमुपलब्धा ।

**सैनिकः**—कदाचिन्मृगयोद्देशेनगतेऽस्मिन्नेनां पालयामीतितमोगुणबुद्धिरापि सत्वगुणबुद्धिरिवग्रहमानीयापालयत् । तदेषातस्य पुत्री । तस्याग्रहमिदं विश । अहमपिगच्छामीति निष्क्रांतः ।

**शांतहृदयः**—भवतु परस्त्रीअवर्णनीया । दुष्टपत्रमस्यै ददामि ।

**कमला**—हलाएषकोभवेत् अहमप्येनंरूपातिशयादेवं मन्ये । तथाहि

असावतीरूपवान् रतिर्विशोकयाचनैः ।
कपार्दचेतसागतो रतिंहिजाग्रतः स्मरः ॥
मदीयरूपनिंदितां विलोक्यबुद्धिमानपि ।
हरेणदृश्यतेसखितमेवयातिमे मनः ॥ २६ ॥

**शांतहृदयः**—किमिदं रूपमिमोहमुपगतः । पुनःसज्ञामुपलभ्य ।

पक्ष्मयुक्तनयनां समकुर्वन् पक्ष्महीननयनाविलज्जितुं ॥
रूपवत्यइतिगर्वजुषोऽलं गर्वनाशकृदिवानयाविधिः ॥ २७ ॥

इत्युपसृत्य । अत्रभवतिकमले । कमलापृच्छेनं तावत्कस्यपुत्रोऽयंकस्मादिहागतोऽसीति ।

**चेटी**—तथेति । भद्रस्वागतंतव कस्यत्वंपुत्रःकस्मादिहागतो भवान् ।

**शांतहृदयः**—उपविश्य अहंशतधन्वपुत्रःकिंचित्कार्यवशात्प्रेषितोऽस्मि दुष्टबुद्धिनाएतत्प त्रिकांगृहीत्वागच्छेति अतोपत्रिकां गृहाण । चेटीगृहीत्वा । कमलेपत्रिकेयंग्रहाण । इति अर्पयति । कमला । गृहीत्वावाचयति ॥ चि. **कुं. कमलेत्वं अरण्यादानीयपालिता । इदानीं आगतस्यास्यविक्रमसौंदर्यादि**

गुणैर्विशोभितं स्वाधीनाभ्यांपयोधराभ्यां जित्वैनंतातवसतिं प्रेषय । तथाहि ।

कुरुकुसुमशरातिपुष्टकाभ्यां कुसुमशरेण शरैश्चपूर्णकाभ्यां ॥
शुभगुणयुतमेनमाशुजित्वा पितृवसतिंसुदृशंपयोधराभ्यां ॥ २८ ॥

इतितातेनलिखितं । हलातातेनापिशुभगुणयुतस्य पाणिग्रहणंकुर्विति ।

चेटी । अनेनसह । इंद्रदत्तपयाधराभ्याप्रयुध्यैतं स्वीकुरु ।

**कमला**—जनांतिकं । ममप्रतिज्ञानुसारेण पयोधराभ्याप्रयुध्यमयापराजितोप्ययं अनेनैवसहानंगयुद्धंकरोमि । प्रकाशं । हलाद्रुतंपयःपूर्णौघटावानय ।

**चेटी**—तथेतिनिष्क्रम्य घटावानयति ।

**शांतहृदयः**—( आत्मगतं । ) अहोयुद्धात्पूर्वंजल पूर्णघटानयनं सुनिमित्तानिकथयति ।

**चेटी**—सखि आनीतः पयोधरः । तेनप्रयुद्धस्वेति अर्पयति ।

**शांतहृदयः**—प्रयुध्यतांराजपुत्रि । इतिसमीपमागच्छति ।

**कमला**—सरोषं । घटाभ्यांताडयति ।

**शांतहृदयः**—सचिंतमात्मगतं ।

यथाऽनयाताडितहेमकुंभो ममेदृशंकोमलहस्तपद्मं ॥
प्राप्यातिपीडांकुरुते तथास्या वक्षोजकुंभोममवक्षसीव ॥ २९ ॥

कमला । सरभसं । गृहीत्वाघटौचेट्यैसंज्ञां ददाति ।

**शांतहृदयः**—चेटींनिवार्य । घटौगृण्हातिगाढं ।

**कमला**—हा इंद्रशचीकलत्रायंकोपि त्वयादत्तौघटौ मुनिपुत्रोविजिग्ये । मांत्रायस्व २ ।

चेटी । समुनिपुत्रो रक्षतित्वां ।

ततः प्रविशत्याकाशयानेनससैन्यस्सवज्रःसहरिर्हरिः ।

**इंद्रः**—रेरेदुष्टात्मन्एवमेकाकिनींकन्यकांजित्वाजीवन्यास्यसि । इतितस्मिन्वज्रं क्षिपति ।

**शांतहृदयः**—प्रियेत्वत्कृतेइंद्रोविष्णुसहायो युद्धायोद्युक्तः । भवतुक्षणमेवशक्ररहितां भूमिंपश्यसि । इतिशरैर्हतितं ।

**विष्णुः** । ( सस्मितं । ) रेरेशठहृदयचंडंममचक्रंसहस्वेति क्षिपति ।

**शांतहृदयः**—( विहस्य । ) भोभोविष्णुयमप्रभृतयो क्षणमात्रंबाणवृष्टिंसहध्वमितिबाणवृष्टिंकरोति ।

**विष्णुः** । ( सभयं । )

चक्रंनष्टंभूपेनैव विष्णुंजित्वावज्रंशांतं ॥
शक्रस्त्वांभोभूपेनैव कालंजित्वाकन्याप्रापा ॥ ३० ॥

हेशक्रादिप्रभृतयो पलायनेनालं । ब्रह्माणंब्राह्मणांश्चास्यविवाहार्थं आन्हयागच्छेति ।

**शक्रः**—तथेतिसैन्येनसह निष्क्रांतः ।

**विष्णुः**—वत्स शांतहृदयप्रसेदिवानस्मि ।

**शांतहृदयः**—प्रणम्य । तवपितुरलंशश्वत्प्रेम्णाविना ममआगसां दिनेरात्रौसौढुत्वां विना कःशक्तः ।

ततः प्रविशंति पत्नीसहितशक्रभवब्रह्माणो लक्ष्मीश्च पश्चात्प्रविशति ।

**विष्णुः**—शुक्रपुण्याहवाचनायकन्यापक्षे ब्रह्मोपविशतु । अहंतुलक्ष्मीसहितोवरपक्षे उपविशामि । अस्यशांतहृदयस्यमंगलस्नानाय सदासीपार्वतीयुज्यतां । उभौउपविशतः ।

**पार्वती**—हलाशीघ्रमस्यस्नानाय हेमकुंभमानय ।

**चेटी**—तथेत्यानीयस्थिता ।

पार्वती । ( सस्मितं । ) हलाकिंपश्यसि ।

उरोजकांत्यासदृशः किमेषः सुवर्णकुंभःसखिमेदृढेन ॥
विचिंयतंत्र्यंबकरस्थकुंभास्थितासि किंदेहिसुवर्णकुंभं ॥ ३१ ॥

इतिबलाद्गृहीत्वातंस्नापयाति ।

ततः प्रविशतिभीमभट्टादयोद्विजाः ।

**विष्णुः**—शीघ्रमानीयतांशांतहृदयः ।

**पार्वती**—सरभसं । वधूवरौस्नापयित्वाप्रसाधयित्वा चउपावेशयाति ।

**ब्रह्मा**—गणपतिपूजाक्रियतां ।

**महादेवः**—किमर्थंगणपतिपूजासाक्षान्मंगलनिधौ नारायणेस्थितेकुतोवाविर्भविष्यंति विघ्नाः ।

**विष्णुः**—करितुंडपूजावाङ्निश्चयपुण्याहवाचनादि कृत्वाऽऽहशक्रब्राह्मणेभ्योदीयतां दक्षिणा ।

**शक्रः**—तथाकरोति ।

**भव**:—उपविश्यतांभोजनाय ।
ब्राह्मणाः सर्वेउपविशंति ।
**पार्वती**—वधूवरौपरस्परं नामगृण्हीतां ।
**कृष्णभट्टः**—रामभट्टउच्यतांश्लोकः ।
**रामभट्टः**—

समस्तदोषाकरनाशकोपि स्वयंहि दोषाकरमौलिरेषः ॥
भवोरगंभक्तजनानुयातं हंतापितत्सर्पकृतानुपृष्टः ॥ ३२ ॥

शंभोहरहरमहादेव ।
**पार्वती**—वधूवरावन्योन्यं नामगृण्हीतां । अलमलंव्रीडया ।
**शांतहृदयः**—

दुष्टबुद्धितनयापिसुबुद्धी स्वर्गलोकललनाजयरूपा ॥
लीलयोरसिपयोधारयुक्ता सेतिवित्तकमलांममलोका: ॥ ३३ ॥

**कृष्णः**—भीमभट्टत्वमप्येकं श्लोकंपठय ।
**भीमभट्टः**—

कस्त्वंश्रीमान्मृगयऋणिकान्श्रीपातिर्विद्धिनस्त्वं ।
कृष्टातेनशठमतिसुताकायभत्राहठाच्छ्रीः ॥
मुग्धेकांतेक्षितिपतिरहंविद्धिनस्त्वंमहीशः ।
कृष्टासापिप्रतिवचनजडःपातुनःश्रीपतिःसः ॥ ३४ ॥

**लक्ष्मीः**—कमलेपत्युर्नामग्रहणंकुरु ।
**कमला**—

येमेंद्रदंडधरस्वेतत्वहारिदधिमाधुर्यहारिकिरण-
श्रीशेषुयुद्धमखपृष्ठं प्रदर्श्यगतिहव्यंभजस्सुघटिलं ॥
तैर्दत्तशांतहृदवर्णैरुपायनसुकर्मेतिनामपदयोर्यस्मै
यमोऽपिभयभीतार्धनामयुगवर्णैकदानभिषजः ॥ ३५ ॥
स्वस्थोऽभवद्यस्ययवर्णमेलना- ।
यद्वीर्यमाधुर्यवचःसुकीर्तिभिः ॥
पूर्णह्यभूत्तस्यमनोजशांतका ।
कांतश्चजानीथसमस्तसज्जनाः ॥ ३६ ॥

**विष्णुः**——वयंसर्वेगच्छामइतिवधूवरौ विनानिष्क्रांता : ।

**शांतहृदयः**——प्रियेचित्रमेतत् ।

त्रिनेत्रयुक्तोऽपिकथंमृगाक्षि गुप्तांबरेणैववदेतिशैलः ॥
कुतोभयंतस्यसुधांशुभीतस्तत्रैवकस्तंघटयांचकार ॥ ३७ ॥
नपौर्णिमाचंद्रसुपीडितांगो । यथाऽष्टमीबाणसुधांशुभीतः ॥
तत्कारणंकिंनुवदेतिसुभ्रु । तत्पार्वतीतुंडपराजितत्वात् ॥ ३८ ॥

कांतेशतधन्वाश्रमंगच्छामि ।

**प्रिया**——आर्य नगव्यंतावत् ।

**शांतहृदयः**——तथेतितयासहनिष्क्रांतः । इतिनिष्क्रांताः सर्वे ।

इति चतुर्थोंकः ॥

# अथ पंचमोंकः ।



ततः प्रविशतिदुष्टबुद्धिः सैनिकश्च ।

**दुष्टबुद्धिः**—सैनिकमंत्रनिर्मितः प्रेषितः सर्पः नाद्यापिप्रति निवृत्तः । तस्स प्रतंगत्वातद्वृत्तांतं ज्ञात्वाशीघ्रमागच्छ ।

**सैनिकः**—तथेतिनिष्क्रम्यपुनःप्रविशति ।

**सैनिकः**—जयतु २ महाराजः ।

**दुष्टबुद्धिः**—किंकिंवृत्तांतंतस्यदुरात्मनः सर्वंकथयाधुनाजीवतिवानवा ।

**सैनिकः**—अद्यापिजीवति ।

**दुष्टबुद्धिः**—तयोर्युद्धोनाभूत् ।

**सैनिकः**—अभूदेव ।

**दुष्टबुद्धिः**—कोयुद्धः ।

**सैनिकः**—अकाययुद्धः ।

**दुष्टबुद्धिः**—( स्वगतं । ) सातद्दशाभवितुं नार्हति । अकाययुद्धो नामबाणयुद्धोभवेत् । प्रकाशं । सैनिकयुद्धंवर्णय ।

**सैनिकः**—श्रृणोतुदेवः ।

नीविबंधनमसौपरिमुंचन्नालिलिंग दृढबाहुलताभ्यां ॥
तातहस्तलिखितेक्षणकोपमेप एवनुनुदेदृढसंगः ॥ १ ॥

**दुष्टबुद्धिः**—किंदुरात्मारंतुमारेभे ।

**सैनिकः**—नहि २ कथयामिसर्वं । पश्य ।

स्तस्याः पीनतमंपयोधरयुगं गृण्हनूपसह्यात्मनि ।
स्वस्मदेवकरद्वयेनकिमिदं वज्रादृढंविद्यते ॥
पूर्वमत्तगजेंद्रकुंभयुगलं चाभूत्स्वहस्तद्वया ।
त्वष्टंसंप्रतिस्वत्पयोधरयुगाद्भीतो करौमेजितौ ॥ २ ॥

**दुष्टबुद्धिः**—ततस्ततः ।

**सैनिकः**—

पश्चात्सुतातेकुशंसाविकृष्य । स्वकीयकौपीनपयोधरौसा ॥
करद्वयांत्तचसुवंचयित्वा । वृथांऽबरेणैवहठाद्रुरोध ॥ ३ ॥

**दुष्टबुद्धिः**—ततस्ततः ।

**सैनिकः**—

कुचघटयुगलंप्रसह्यतस्याः । समधृतचोलप्रभापहास्यरत्नां ॥
अतिकठिननखैर्विदार यन्स । दृढतरमाशुप्रगृह्यसस्वजेतां ॥ ४ ॥

**दुष्टबुद्धिः**—( सरोषं । ) सदुरात्माकिंतांसस्वजे ।

**सैनिकः**—नहिनहि ।

**दुष्टबुद्धिः**—तर्हिकिमेवंतांसस्वजेसस्वजे इतिजल्पसि ।

**सैनिकः**—स्वगतं । अस्यपुरः विचार्यकिमपिभाषितव्यं नवेदितव्यामस्मै तद्वृत्तांतं । प्रकाशं । देवकथयामि ।

चंदनेनसमलंकृतदेहा । कुंकुमेनचपयाधरावपि ॥
वक्षसिवनृपतिंपुरःसुता । वंचितंकृतवतीविलिप्यते ॥ ५ ॥

**दुष्टबुद्धिः**—ततस्ततः ।

**सैनिकः**—ततस्तेतनयार्दीनवाचाशक्रशक्र त्वयादत्तपयोधरावेषजित्वामामपिवशीकरोति त्रायस्वत्रायस्वेतिदयोपेतः शक्रः विष्णवादिनासमेतश्चिरतरं प्रयुध्य शांतहृदयंविजिग्ये ।

**दुष्टबुद्धिः**—( सहर्षं । ) ततस्ततः ।

**सैनिकः**—ततःशांतहृदयोपि भोभो शक्रादिसेनानायकाःबहुनाबाणवृष्टिपातेनकिमेकेनैवबाणेन सर्वान्निवारयामीतिशक्रंतताड ।

**दुष्टबुद्धिः**—ससंभ्रमं । ततस्ततः ।

**सैनिकः**—तस्यैकबाणस्यतीक्ष्णतांकिंवदामि । पश्य ।

तन्व्यास्तातरिपोःकरावभिजितावित्येवगर्वासह- ।
स्त्वावाभ्यांनृपतेस्तलादिभिरसौशून्यस्तृतीयःकरः ॥
बाणोगर्वतमैकमेकमितितौ ह्यंगान्यशेषान्यपि ।
जित्वाहृद्ग्रहमाविवेशसुचिरंद्वेषीसुतायाः क्रुधा ॥ ६ ॥

**दुष्टबुद्धिः**—ततस्ततः

**सैनिकः**—

तद्युद्धसंभवमिदंचलघर्मतोयं । दृष्ट्वामराद्दादिसविस्मयमानसाश्च ॥
मंदाकिनींकिमुह्यदाद्धरिराहुरेवं । प्रेम्णापयोधरयुगंश्रुतवंतएते ॥ ७ ॥

**दुष्टबुद्धिः**—ततस्ततः ।

**सैनिकः**—

हृतास्म्यंहसत्यंमहंमृतास्मि । पराजितास्मीतिवचास्युवाच ॥
अंगान्यशेषाणिचमारबाणै । र्विद्धानिपातुंममरक्षशक्तः ॥ ८ ॥

**दुष्टबुद्धिः**—ततस्ततः ।

**सैनिकः**—

पराजितास्मीतिवचोनिशम्य । हठाद्गृहीत्वा वदनंचुचुंबे ॥
मृषाऽब्धिजातंपपुरेवदेवा । बिंबाधरेऽस्याह्यमृतंहिलग्नं ॥ ९ ॥

**दुष्टबुद्धिः**—सर्वथातनयांजग्राह

**सैनिकः**—अथकिं ।

**दुष्टबुद्धिः**—सरतिं केनप्रकारेण कृतवान् ।

**सैनिकः**—तांरतिमपिकथयामि । सलज्जं । शृणोतुदेवः ।

नैतत्पयोधरयुगंतवकिंतुतन्व्या ।
अत्यंतवर्तुलमहंह्यवलोक्यवक्ष्ये ॥
अस्त्याहचक्रमिहवेत्सिप्रियेयदित्वं ।
सत्यंवदेतिललनाकुचकुंभहस्तः ॥ १० ॥

**दुष्टबुद्धिः**—ततस्ततः ।

**सैनिकः**—

चंद्रंपृच्छयदास्थकांतामितितंचंद्रोऽयमूचेरुषा ।
पूर्वस्मिन्जननोपिचक्रयुगलमस्मान्नभीतिंहिसत् ॥
अद्यापिस्तनतांविगाह्यममकिंवक्षस्थितंपीडयन् ।
त्वद्धस्तस्थितस्वार्धदेहनखरव्याजात्तुवाराजते ॥ ११ ॥

**दुष्टबुद्धिः**—अलमनयाकथया । तमेवहंतुंगच्छाव । इतिसैनिकेनसहनिष्क्रांतः । ततःप्रविशतिशतधन्वाशिष्यः ।

**शिष्यः**—सखेदं । अद्यापिशांतहृदयोनायातः । दुरात्मनांकालोऽयं । केशवतस्मिन्निदानीमप्यनुग्रहंकुरु । सशांतहृदयः पुष्पसेनपुत्रोराजामवितुंनार्हति किं । अथवा । तस्यदुष्टबुद्धेरेवभक्तिस्त्वयिशाश्वतीदृश्यते । तथाहि ।

निर्व्याजापदयुगलेतवाच्युतास्य ।
भक्तिर्नोममकिमुशाश्वतीप्रसीद ॥
तालुकाधिपातिरमुंद्विजौघशीर्षं ।
छित्वायज्जयतिशिलेतिमन्यतेत्वां ॥ १२ ॥

( सचिंतं । ) तद्वृत्तांतं पत्रलिखितंनज्ञातं । पत्रोकिमपिनदुस्तरंतदितिचतुर्थाक्षरण्येवलिखितानि । अहमपिगुरोराज्ञया मृगमाणोऽपितंनप्राप्तः ।

ततःप्रविशति सभार्यः ।

**शतधन्वः**—प्रियशांतहृदयःक्वगतःस्यात् ।

**शिष्यः**--गुरोअभिवादयेभवंतं ।

**गुरुः**---दीर्घायुर्भव ।

**शिष्याप्रियः**--शांतहृदयः क्ववर्तते ।

**शिष्यः**—तंनजाने । एषपत्रस्तस्मादागतः । मयातत्पत्रगतवृत्तांतंनज्ञातं ।

**गुरुः**---इतआनयतत्पत्रं ।

**शिष्यः**--आनयाति ।

**गुरुः**—वाचयति । दुस्तरंतत् । प्रियेतन्नामादशधंटंमृगयांकृत्वामदागमनं अद्यदुस्तरामिति । पत्रगतंवृत्तांतंकुत्रचित्सिंहेन हिंसितोभवेत् । हावत्सशांतहृदय ममंदभाग्यस्यतातशब्दस्यावाच्यकस्य वाच्यकंकुर्वन्क्वगतः । इतिरोदति । सर्वेमूर्च्छिताः ।

**मुनिः**—संज्ञामुपलभ्य । तथाहि ।

वत्सत्वयावनविहारवतांमृगाणां ।
मत्तेभकुंभपरिपाटनदक्षसिंहं ॥
हत्वापुरोंतकइतिस्वामिवाहमेवं ।
ज्ञातोऽस्मिकिंनुहरिणावनप्रेषणेन ॥ १२ ॥

**प्रिया**—हावत्सशांतहृदयमयारक्षितहृदयक्वासिगतः देहिमेप्रतिवचनं । इतिमूर्छति ।

**शिष्यः**---आर्यबुद्धिसागरस्यतस्यपत्रगतं वृत्तांतं अन्यदेवभवितव्यंममतुएवं भासते ।

**गुरुः**—किमिति ।

**शिष्यः**—

दुष्टबुद्धिहननंमयातया ।
दुस्तरंतदितित्यक्तवानहं ॥
दुष्टबुद्धिसुतयापदकंज- ।
द्वयमिदंसुखशायिनमेव ॥ १३ ॥

**गुरुः**—सशांतहृदयः कदापिदुष्टबुद्धिहननंमयादुस्तरमितिनवयूक्तुमर्हति । एवंतद्भावोममभासते । तथाहि ।

दुष्टबुद्धिसुतयारममाण- ।
स्तच्चतुर्थहननेच्छुरहंतां ॥
रंजयन्भवदनुग्रहात्स्वयं ।
तत्सुखंह्यनुभवामियदग्रहे ॥ १४ ॥

( **नेपथ्ये** । ) ( **नेपथ्ये** । ) अयमहंभोः ।

**गुरुः**—शिष्यज्ञायतांकिमेतत् ।

**शिष्यः**—निष्क्रम्यपुनःप्रविश्य । गुरोमुनिरागतः ।

ततःप्रविशतिमुनिवेषधारीतामसनामको दुष्टबुद्धितनयः ।

**गुरुः**—मुने अभिवादयेभवंतं ।

**मुनिः**—( आत्मगतं । ) एतान्वंचयतुमयमेवकालः । प्रकाशं । मुने भवान्नमस्कर्तुंनार्हति ।

**शतधन्वः**—( ससंभ्रमं । ) मुनेकिमर्थं ।

**मुनिः**—शांतहृदयेत्वत्सुतेस्वर्गगतेसति युष्मत्तोनादेयंनमस्कारादिकं । अत्रैवोपविशामि ।

**शतधन्वः**—नयुक्तंऋषिर्भवान् भूमावुपविशतुंआसनेउपविश । तथाहि

ग्रहमागतंसपदिस्वागतेनरो ।
मनुजोवदेद्भुविसएवयोग्यवान् ॥
नसहेदियंदिविबुधैश्चपठ्यते ।
भूमिःस्वयंधरणिसक्तपृष्ठोद्विजं ॥ १५ ॥

**मुनिः**—तथेति । उपविशति ।

**शतधन्वः**—मुनेसशांतहृदयः कथंहतःकेनहतःकथ्यतांसर्वं ।

**मुनिः**—इतोदुष्टबुद्धिनगरमेत्यतत्तनयामूढ्वा तंदुष्टबुद्धिंजिघांसुःसमरभुवमागतः।

**शतधन्वः**—ततस्ततः।

**मुनिः**—ततःसदुष्टबुद्धिरपिशक्तेन तामसनामकेनसुतेनसहकंकपत्रविष्टिनातं जघान।

**शतधन्वः**—हावत्सशांतहृदयत्वांवीक्ष्यविस्मृतमृतसुतदुःखोऽहं त्वच्चरितं किंवदामि। प्रतिदिनंममपूजार्थंपुष्पाण्यानीय समर्पणं अद्यापिनविस्मर्यते। रेरे दुष्टबुद्धेत्वंतस्यपुष्पसेनस्यवधूशतं बाळावतीमपिहत्वामयापाळितमेनंतस्यसूनुंहंतुंकथंनलज्जितोसि वत्सत्वन्मुखंदुर्लभंमे।

**मुनिः**—अलमनेनदुःखेन।

**प्रिया**—हावत्सशांतहृदयक्कगतोऽसि देहिमेप्रतिवचनं। इतिपतति

**शतधन्वः**—प्रियेऽधुनापुष्पसेनोभार्याभिःपुत्रेणसह सुखमास्ते! वयमप्यग्निप्रवेशेनतमेवगच्छाम।

**मुनिः**—दुखिनंत्वांद्रष्टुंनशक्नोमि। आत्मगतं। किंतुमृतंत्वांद्रष्टुंशक्नोमि

(नेपथ्ये।) रेरेदुष्टबुद्ध्यादिसेनाप्रभतयो भवत्प्रभुर्दुष्टबुद्धिर्यमपुरंगतः तथाहि।

दुष्टबुद्धितनयोनदृश्यते।
तंपितुर्मुखमुदीक्ष्यनंदितुं॥
प्रेषयामिकिमुपत्तनेपुरो।
योऽबलाशतमिमांपतेर्मुखं॥ १७॥

**तामसः**—श्रुत्वा। (आत्मगतं।) मत्तस्तंमामपिहानिष्यति। इतोपलायिष्येतावत्। प्रकाशं। मुनेत्वन्मरणादिकंनसहे अतोगच्छामीतिनिष्क्रांतः।

नेपथ्ये। रेरेतामसअलमलंधावनेन।

**मुनिः**—श्रुत्वा। शांतहृदयेनाकारितंस्यात्। आकाशे। गीयते।

योदुष्टःप्रतिकर्मणानृपवधूं प्राप्तंहिराज्यंपदं।
विस्मृत्याशुवधूशतंनिहितवान् भीमेवनेगर्भिणीं॥
हत्वाबालवतीयमाशुहननं कर्तुंहियातः किल।
दग्धस्तेनसभार्यएषसुचिरंस्वस्था सदुःखापदा॥ १८॥

**मुनिः**—प्रियेवत्सः किलायातः। प्रियाकुतोऽद्यापिवत्सः।

**शिष्यः**—नेपथ्याभिमुखमवलोक्य । सत्यमायातः ।

ततःप्रविशतिशांतहृदयः ।

**मुनिः**—शांतहृदयमवलोक्याप्रियेसत्यमायातः । वत्सएहि ।

**शांतहृदयः**—गुरोभवंतंमुनिवेषधारिणातामसेन वंचितंज्ञात्वाशीघ्रमा-गतोऽस्मि ।

**मुनिः**—क्वासौदुरात्मातामसहतकः । ययामे तपोविभूत्या दग्धंकुर्या

**शांतहृदयः**—सतुतज्जनकं हत्वाआगच्छंतंमांविलोक्यपलायितः ।

**मुनिः**—भवतुभोजनायगच्छामग्रहं ।

**शांतहृदयः**—आकाशवाण्याऽहंबाळावतीपुत्रइति ज्ञातः । तांद्रष्टुमिच्छामि

**प्रिया**—वत्सआतिचिरंक्षुधितोऽसिभोजनायचर ।

**शांतहृदयः**—तथेतितैःसहनिष्क्रांतः । इतिनिष्क्रांताः सर्वे ।

इति पंचमोऽङ्कः ।



# अथ षष्ठमांकः ।



ततः प्रविशतिशांतहृदयःशिष्यश्च ।

**शांतहृदयः**——मित्रतेप्रजावतींशालस्तामसोऽत्यंतंपीडयति इतिश्रुतवानास्मि ।

**शिष्यः**——तांपीडयतुत्वंकिंकरोषि ।

**शांतहृदयः**——मैवंवद । सदुष्टस्त्वांहत्वात्वत्पतिंचहत्वाराज्यमद्यापि भुंक्ष्वे इतिवदति अतःशीघ्रंतमेवहत्वातत्पीडयामुक्तांपत्नींस्वांकमारोप्यराज्यंभुंक्षे ।

**शिष्यः**——एकवारंगच्छंतंत्वांमृतमितितामसमुखेनश्रुत्वासंतप्तोगुरुः । अधुनापितत्पुरंनगच्छेत्यादिशति ।

**शांतहृदयः**——त्वंशांतहृदयोऽयतामसपीडितांपत्नींश्रुत्वातंहत्वाऽलातुंगंतुकामोऽहंतमेवानुगच्छामीति कथयित्वाऽगच्छ ।

**शिष्यः**——भ्रातस्सएषतामसोऽत्यंतक्रूरोनिर्दयश्चभासते । पश्य ।

निर्दयश्चसमदृश्यतेसखे ।
तामसस्तवमदांदहच्चयत् ॥
दुष्टबुद्धितनयोऽयमुच्यते ।
तच्चतातगुणमेतिपुत्रकः ॥ १ ॥

**शांतहृदयः**——तच्चशीघ्रंगच्छावइतिनिष्क्रांतौ ।

ततःप्रविशतिकमलातामसश्च ।

**तामसः**——त्वत्पतिस्तातंमेहत्वामामपिहंतुकामः ।

**कमला**——सत्वांकिमर्थंहानिष्यति यदिशरणंगतश्चेन्मत्पतिः ।

**तामसः**——किंमहंशरणंगच्छामि ।

**कमला**——यदित्वंप्रतिकुलश्चेत्त्वांहत्वाराज्यं करोति ।

**तामसः**——शृणुतावत् ।

सरभसभुजदर्पयोद्धुकामः समकृततातवधापराधमेनं ॥
सपदियमपुरंप्रसह्यनीत्वा तवनयनांबुपिबंतमेवविद्धि ॥ २ ॥

अपिंच । त्वद्येहेशंतातमुखंदृष्टवंतंकरोमि ।

**कमला**——नमेदेहेशोजीवितेशइतिवद ।

योहरस्यलंजन्मनासह जीवमेवमेकालपसनं ॥
गम्यतेऽपिनोस्थीयतेकथं तेनकृष्यतेमुख्यवायुना ॥ ३ ॥

तस्माज्जीवितेशशब्दोमयिजागर्तीतिविद्धि ।

**तामसः**—तेनकृष्यतेमुख्यवायुवनेतियदुक्तंतत्सत्यं । यदात्वंविधिवास्या स्सदामुख्यप्राणेनविधवामित्वंयुक्तमेव । तथाहि ।

ज्ञेयंमत्तांसभयहृदस्त्वांवेणीहीनां विरहितभर्त्रीं ॥
कर्षन्कश्चित्धृतयविकारो मुख्यप्राणः सरभसमेति ॥ ४ ॥

**कमला**—मैवंवद । समेनाथोऽचिरमेवत्वांहत्वाराज्यंकरोति ।

**तामसः**—अहमेकोपित्वांसभर्तृकीं हत्वा यमराज्याधीश्वरतांप्राप्स्यामि तमेवमृगयिष्ये । इतिनिष्क्रांतः ।

**कमला**—सचिंतंनिश्वस्य किंकर्तव्यमधुना ।

ततः प्रविशत्यश्वारूढःशांतहृदयःशिष्यश्च ।

**शिष्यः**—किमियंतेसखी ।

**शांतहृदयः**—अथकिं ।

**कमला**—विजयतामार्यपुत्रः । इत्यर्धोक्ते बाष्पपूर्णनयनातिष्ठति ।

**शांतहृदयः**—किमिदंकस्माद्भयं ।

**कमला**—तामसाद्भयंत्वांत्वत्पतिंच हनिष्यामीतिवदति ।

**शांतहृदयः**—अलंतद्भयेन ।

**शिष्यः**—सखेपश्य ।

नासिकामाधिसुमौक्तिककलापो दृश्यतेवहतिचंद्रसुलीलां ॥
स्त्रीमुखाब्धिजननोद्यधरोष्ठे वर्ततेकिलसुधेतिसुधांशुः ॥ ५ ॥

त्वंमौक्तिककलापंदृष्ट्वाएवंभूतः । अहंतुसोमंतिनीमवलोक्यविस्मितः । पश्य ।

दृष्ट्वाभूषणशोभितांहृदिजनाः शंकागताऽस्तंशशी ।
नोहुर्मूर्ध्निममांगनां शशितनूरूपंसुवर्णांकितं ॥
तस्याधोऽर्धशशांकमूर्तिसदृशं हस्त्याननस्याधुना ।
शापदेवविनष्टकांतिरितितंन्यस्याभितोंधंतमः ॥ ६ ॥

**शिष्यः**—शांतहृदयतेभार्यायाःकर्णविवरमार्गेण तामसवाक्यानिसत्यापि भूषणे कथंप्रविशेयुः ।

**शांतहृदयः**——अहमप्येतद्विचिंत्यचिंतयाग्रस्तोऽस्मि । तथाहि ।

कर्णभूषणयुगंकथंनुतत्तामसोक्तवचनानिसहेत ॥

अथवा ।

दुष्टसंगपरिहर्तुमत्यजद्रम्यतांहृदमितीविभातिमे ॥ ७ ॥

**शिष्यः**——तामसत्वंमातापितरौनस्मर अहमपिनस्मरामिमयासहसंधिसाचि-
वपदेस्थितः सन्कुरुवृथाद्वेषेणार्कि ।

**कमला**——ससंधिंनकरोति युष्मत्प्रार्थनयाकदाचित्करोतिचेन्मयिकिमप्य-
त्याहितमाचरति । अहंगमिष्ये । इतिकिंचिद्गत्वा ।

जल्पन्मुंचरुषंमयिस्थिरतरां कोवाऽपराधःकृतो स्यकःवामांकनुगच्छसीतिनम-
यागच्छस्व चैलांचलं । गृण्हन्तिष्ठप्रसीदमानिनिकटिं बध्नातिगच्छेतिमा ।

**शिष्यः**——

कांतःकिंनवयौवनेनहि । कणत्कांचीकलापोमम ॥ ८ ॥

**शांतहृदयः**——शिष्यजानासिकिंवक्तुंचतुरामिमां । ममतुएवंभासते । पश्य ।

दुष्टबुद्धितनयाचतुरेयं वक्तुमेवममचित्तजशांता ॥

दुष्टबुद्धितनयाचतुरेव वक्तुमेवममचित्तजशांता ॥ ९ ॥

कःकोऽत्रभोः । प्रविश्यदौवारिकः ।

**दौवारिकः**——जयतु २ महाराजः ।

**शांतहृदयः**——भोभोःसैनिकमाव्हय ।

**दौवारिकः**——तथेतिनिष्क्रांतः ।

ततःप्रविशतिसैनिकः ।

**सैनिकः**——जयतु २ महाराजः ।

**शांतहृदयः**——सैनिकतामसस्यैवंकथय । श्रृणु ।

तामसायसंधिमेहिसर्वसौख्यदायिने ।

विस्मरेतिमातृताततनाशखेदमेवते ॥

तेनसार्धमंबुजाक्षशांतकायशर्मणा ।

स्थापितायक्षेममस्तुमंत्रिणःपदेसदा ॥ १० ॥

**शिष्यः**——अहमेवगच्छामिसंधिंकर्तुं । कदाचिदेनंदृष्ट्वारुषातामसः सैनिका-
स्मद्राज्यधान्यांतिष्ठन्नपितद्वेषिणः पक्षपातेनसंधिंकर्तुमागतोऽसिकिमितिप्रहारंकुर्यात्।

**शांतहृदय:**—भवत्वनेनसहगच्छ ।

**शिष्य:**—तथेतिसैनिकेनसहनिष्कांत: ।

**कमला**—कदापिसंधिनकरोतिकिंतु उभावप्येकदाहानिष्यति ।

**शांतहृदय:**—तर्हिगच्छामवयंचरत्वं । इति अश्वस्कंधेउपवेश्य स्वयमप्युपविशति ।

**शांतहृदय:**—प्रियेसमंतात्‌शंसंतिशांतहृदयविजयस्वेति ।

**कमला**—सत्यं ।

ततःप्रविशंतिस्वसौधजालमार्गहस्थ्य: पौरास्त्रिय: ।

**एका**—एषहत्वातामसंगवमेवभार्यायास्थितमासने पश्यतुममनेत्रं ।

**द्वितीया**—जयतु २ शांतहृदय: ।

**तृतीया**—प्रत्यक्षेणब्रह्मणासंघटितंयुग्मभेतदवलोक्यधन्यास्मीतिवेद्मि ।

**शांतहृदय:**—एता:पश्य ।

करकमलयुगास्स्वतारकाभि: ।
सहकुसुमानिस्त्रियोनिपातयंति ॥
शुभकथनमनेनसूचयंत्यो ।
मयिममपुष्पानिपातनेनकांते ॥ ११ ॥

**चतुर्था**—सैंहिकेयग्रहणेनय:शशी क्षीणकांतिर्भवति तेनविनापिकथंतम:प्रादर्भूत्‌ तद्योग्यं । स्वयशस्तुच्छीकृतचंद्रकांतेरम्यपुरस्तामससैंहिकेयग्रहणंविना तिष्ठतीति चित्रं । भवतुवयंगच्छामइतिमिथुनंविनानिष्कांता: ।

नेपथ्ये । हंतुमागतोऽयमावां ।

**शांतहृदय:**—नेपथ्याभिमुखमवलोक्य । अयेक:प्राप्त: ।

तत:प्रविशत:शिष्यसैनिकौ ।

**शिष्य:**—परित्रायतां २ शांतहृदय: ।

**शांतहृदय:**—कुलचित्त्वांसतामसोऽताडयत्किं ।

**शिष्य:**—अथकिं । ममदैवमेवएवंभूतं । पश्य ।

शीर्षेयस्यजटा:कदापि कुसुमैर्नालंकृतास्सिंचिता ।
स्तैलेनापिमुखे कठोरवचनान्यागंडयोस्ताडनं ॥
कर्णेह्युद्धरणंकरेणनयने कंठेऽपिसक्त:करो ।
निर्गच्छेतिग्रहाद्वाहिश्चसलिलं दैवायतस्मैनम: ॥ १२ ॥

ततःप्रविशति तामसः ।

**तामसः**—साधु २ बाहुबलविनोदकालोयमेव ।

**शांतहृदयः**—शिष्यदुष्टोऽयमागतः । त्वमश्वारूढःसैनिकैःसहगच्छ । ते-प्रजावतीगृहंनयाप्रियेदेव्याशिष्येणसहगच्छ ।

**कमला**—नगच्छामित्वांविना ।

**शांतहृदयः**—भद्रतुशिष्यतेनसहत्वमेवगच्छ ।

**शिष्यः**—तथेतिनिष्क्रांतः ।

**तामसः**—प्रहस्य । रेरोईमक्षणमेवनभविष्यासि मद्बाहुबलाग्निनाशलभतां प्राप्ययमपुरंगच्छसि बाहुयुद्धायागच्छ ।

**शांतहृदयः**—सत्यंत्वमेववीरः अतएवनारीवितदामुनिवेषेणमांदृष्ट्वापलायितः । भवत्वित्युत्तिष्ठति ।

**तामसः**—सरोषं ।

हस्तेनहस्तोपरिदक्षिणेन संघट्टयिष्यन्निवतामसोऽलं ॥
एह्येहिदुष्टेतिस्ववाक्यतीक्ष्णादास्फोटघोषो ह्यधिकःपरीक्षन् ॥ १५ ॥

**शांतहृदयः**—मत्करोपिक्रुधेवत्वत्करइवशब्दंकुर्वन्वांहत्वात्रैव कमलामुप-वेशयामीतिसूचयन्निवममोर्वोस्ताडनं करोतिपश्यपश्य ।

**तामसः**—

उत्क्षिप्यधूलिंकरकुड्मलेन पुनःपुनर्वक्रमभूच्चवक्रे ॥
स्वर्जावहर्ताइतगतिकिंनु मियैवकालंकिमुपश्यतीति ॥ १६

इतितथास्थितः ।

**शांतहृदयः**—

सदैवएतस्यमनोऽपिवक्रंवक्रंपुनः केवलमेवदेहं ॥
वक्रंनकुर्यांकिमसूययेव कृत्वापुरोगर्जनसोदरोऽभूत् ॥ १७ ॥

इतितथास्थितः ।

उभौमिथःस्वेनकरेणहस्तं संपृश्यसंपृश्यललाटमेव ॥
धातुर्लिपिंतांशनमायुषः किंस्थिरांविधातुंमृशतःस्विर्नाव ॥ १८ ॥

**कमला**—

मन्मनोपिकथयत्यलंप्रिये स्पर्शनंकुरुललाटकेसुखं ॥

कुंकुमस्यसुकृतंकिमस्तिवा नेतिबोधइवमांकरेणते ॥ १९ ॥

इतिहस्तेनललाटंस्पृशति ।

सरभसमपकृष्यबाहुदंडंधृढतरालिंगितवामहस्तमध्यः ॥

जघनयुगलमध्यसक्तपाणिर्भुविपतनं कुरुतेस्मतंसनीचं ॥ २० ॥

तदनंतरमसौपरिपतनखेदमनुभवन्रक्तनयनसूचितशांतहृदययुद्धसमयः समंततोविहंगमुद्धेरावमुखरितदिशोदशापिविलोकन् बहिरपिप्रकटितनिजगुणमहिमेवमध्यमगुणरजोधूसरितांगस्तामसोऽ त्यंतरोषादिवमध्यमगुणसक्तनयनममध्यमगुणविशिष्टममध्यमगुणस्वभावं शांतहृदयमुपेत्यतत्कायस्थसत्वगुणंपरीक्षितुमिवभुजावुपगृह्य शतगुणंभ्रामयितापिबाल्याकृतडोलाविधिसंस्कारस्यमेऽयंसंस्कारएवजातइतिविचिंतयंतामिवस्थितंतंनीचकः पातयामास ।

कथितइवभुवासशांतकायः किमुपतनेनजहीतितिष्ठमत्तं ॥

नटइवबहुधोत्पतंतमेनं गलहातिपातितमस्तकंचचक्रे ॥ २१ ॥

**शांतहृदयः**—( सूर्यमवलोक्य । )

तंदीपंजातांतमोहेतिहेळे बुध्वाहृष्टास्वान्करान्छेदयेयं ॥

क्षीणोभूत्वाह्यंबरेतिष्ठसाध्वी हंतीत्येवंनैवत्वांक्षणिकांतिं ॥ २२ ॥

**कमला**—नार्यतेवचनंमन्यते ।

**शांतहृदयः**—किंचित्क्षीणोभूत्वाऽऽकाशेतिष्ठति । रविः । वयंचाश्रमंगच्छामः । नेपथ्ये ।

एबीसीडिक्राप्स्गुड्झड्झेडतान् ।

शब्दान्जल्पन्राजद्वारंगतःसन् ॥

शष्पैस्तुल्यान्भृत्यकान्भीषयन्स ।

ह्यंतर्वर्त्नीप्राप्यमांमोदतेऽलं ॥ २३ ॥

**शांतहृदयः**—आकर्ण्य । प्रियेकविरिवायंभाति । तंसंभावयावइतिनिष्क्रांतौ ।

ततःप्रविशतिशिष्यः ।

**शिष्यः**—इतस्ततः परिक्रामन् । किंकरोमि । अहंतुमहादुर्दैवी । करावलोक्य ।

करौयुवाभ्यांजलपूरितौघटौ धृतावुरोजाख्यघटौनयोषितां ॥

अथवा ।

विचिंत्यभाविश्रममब्जयोनिनारुषैवसृष्टेर्लिखितं कदापिन ॥ २४ ॥
आहेतिचक्रायरूपमार्तीहिंसकारीमळत् ॥
मारेतस्यामधर्मोनेभीतोऽहंसकरोमला ॥ २५ ॥
पांडित्यतातःफणिभर्तृशायी बलानुजोभक्तिविहीनशत्रुः ॥
मेशः सदापात्वधमाधमंमां प्रवर्गदेहस्त्वपवर्गदोऽयं ॥ २६ ॥
चैलानिधौतानिसहश्रशोमे स्त्रीणांमनोहारिसुलोचनानां ॥
आच्छादनीयंनकदापितेन कामार्द्रवस्त्रेणमयानुधौतं ॥ २७ ॥
त्वेधाविभज्यविधिनाकुचकुंभयुग्मे ।
बिंबोष्ठकेहरिपदेचसुधाहिसक्ता ॥
पीत्वाजनास्त्रिदशतामुपयांतियांतु ।
सादुर्लभायदिजनस्यविनाशकास्य ॥ २८ ॥
धातनियोषित्कुचकुंभयुग्मदुर्गाणिस्वच्छानिमयांबराणि ॥
कृत्वापिधौतंनविनीलतुंडमाच्छाद्ययुग्मं ग्रहणेप्यसंगात् ॥ २९ ॥
रेजिव्हेसकृदप्यखंडमधुरंरम्यंप्रियायामुखं ।
देवानामपिदुर्लभं किमपिबस्त्वांधिकृच जिव्हेतव ॥
मन्येनाममृषेतिसत्यमधुनाजिव्हारसज्ञासदा ।
संपातुंजलमेवयाचसिपुनर्दैन्यानुपूर्वाहितत् ॥ ३० ॥
ममतायदिनस्सृजतेमयि तांमधुसूदनभक्तामिमंपदवीं ॥
सुकुचग्रहणंनरकाधिपतिं पुरुषोत्तमभोकुरुमांनयमां ॥ ३१ ॥

ततः प्रविशतिशतधन्वमुनिः ।

**मुनिः**—रेशिष्यशांतहृदयःक ।

**शिष्यः**—सतुतामसंहत्वापत्नीसहितोगोदावरीतटिन्यांक्रीडितुमारब्धः ।

तथाहि ।

मर्त्योपकारार्थमलंपयोधरे वर्षत्ययंमज्जतिलोकसंघकः ॥
किंतुप्रियेवक्षसिरूढमूलके सिक्तंनमेपादरजोऽपिहंतते ॥ ३१ ॥

एवंनिरंतरंनिरंतरस्वकीयाधरवर्तिमधुसंसर्गतयेवकृतमधुवसतिं तांप्रियतमस्य वाणीमाकर्ण्यकरपादविशोधनार्थं करकमलेनजलमाहरंतींसाध्वींविलोक्य तन्व्या-

मुखकमलेगंडूषजलमुत्क्षिप्यपुनः पुनः स्वमुखंजलेनपूरयंतमेनमवलोक्यायिकांत-स्वदीयमुखं लोपशब्दमात्पुंमदीयवर्गस्थवर्णएवहेतुरितिविचिंत्यात्यंतशोकादिव द्वितीयलवर्णे लुप्ते सत्यपिजलवाहकंकथंभवतीतिशंकांपरिहरेत्युक्तः शांतहृदयःप्रिये लोकेजलजंहिजलंविनानोपजीवति प्रसिद्धंकिंतुत्वदीयलपनजलजंजलविरुद्धंकथ-माचरतीतिमदीयशंकां परिहरेतिवचनेनलज्जावनतमुखींप्रियांआकृष्य प्रियेऽत्र मज्जामिबुद्बुदमुपरिपश्येतितन्मिषेणमज्जनं कृत्वाप्रियाजघनयुगलंहस्तेनगृण्हंत-मेनमज्ञात्वाहेशठमकरमदीयोरुग्रहणं नयुक्तमितिवचनमाकर्ण्यलुप्ताद्याक्षरमकरेण त्वदीयजघनग्रहंयुक्तमेवकिंतु कदलीस्तंभोजलेनिमग्नः किमुनजानेइति वचनेन सहोत्तिष्ठन् मयिसभायांरथेवापार्थिवादेशांतरेवातिष्ठतिसत्यपिमदीयप्राणान् तव वक्षस्थमिदंकंदुकयुगंसदाहरतीत्यतोएनमुत्क्षिपाम्यंबरमुपैत्वित्यसूययेवाप्रियां कंठसी-न्निदृढतरमालिंगनंबाहुयुगेलनकुर्वन्नर्जुनःसुभद्रयेवशतमन्युः शच्येवाजराजोइंदु-मत्येवतयाकमलयासह चिरतरंचक्रीडे ।

**मुनिः**—भवतुतेनसहागच्छ ।

**शिष्यः**—अपिच ।

अंसहितंमेत्वंशुकमेनं ॥
स्थापयभूम्यांसाप्रियमाह ॥ ३१ ॥
हरतिवसनंशशिवदनायाः ॥
पततिनयनंकलशयुगेते ॥ ३२ ॥

**गुरुः**—श्रुत्वासस्मितं । निष्क्रांतः ।

ततःप्रविशातिसकमलः शांतहृदयः ।

कमला—

कृष्णोऽयंमणिरित्यलंकथितवान्कृष्णंतुसम्प्रणियन् ।
कृष्णेनापिप्रशंसितोननुभवान्राजाधिराजेत्यलं ॥
दत्तंयेनभयंरुषायादित्वयामह्यंनदत्तःकरो ।
नेत्रोत्पाटनपूर्वमेवनितरांहन्मीतिकृष्णायच ॥ ३३ ॥
कृष्णादप्यतिगर्वपूर्वकमिमंभीतात्करंचाहरन् ।
कृष्णस्यैवमुदःपितापिनितरांकृष्णेतुनप्रांगकः ॥
त्यक्तामांगमनंत्वयायदिकृतंहेकृष्णहन्मीत्यल ।
मारान्छेतिवदन्सकीटकवरोवर्तेतहेकांतकः ॥ ३४ ॥

**शांतहृदयः—**

येननष्टरदनाहिनाप्रियेदंशितेति यमपत्तनंगता ॥
कालवन्हिविषयुक्तदंतकैर्दंशितापि चिरजीवितासकः ॥ ३५ ॥

**कमला—**

अत्तिकानुग्रहेणैवपुंसःप्राप्तांहिसंततिं ॥
रमायाःपूर्वपुण्यस्य व्ययलब्धामापिस्थिरां ॥ ३६ ॥

**शांतहृदयः—**

चतुर्मुखोनब्रह्मापिकृष्णोपिनाहिकेशवः ॥
राजापिसैन्यसंयुक्तोनाहिराजाप्रियेसकः ॥ ३७ ॥

**कमला—**

दुष्यंतराजस्यमनोरमाकाकाकस्तुपिंडं कुरुतेकिमेते ॥
स्तुत्यांतिदेवंकमथेतिलोकाः शकुंतलालिंगातिरामचंद्रं ॥ ३८ ॥

**शिष्यः**—समीपमागत्य । जयतु२ महाराजः ।

**शांतहृदयः**—सप्रेममयाजितताराजानः ।

**शिष्यः**—किंत्वयासर्वेजिताः ।

**शांतहृदयः**—अथ किं ।

**शिष्यः**—अद्यापिद्वौनजितौ । तथाहि ।

प्रसिद्धौसंम्राजौविगतमरणावाहृतकरौ ।
करार्द्यैर्हीनौतौजगतिसकलादाहृतकरौ ॥
विजेतुंर्भीष्माद्यैरपहृतकराद्यावपिसदा ।
गतावूर्ध्वस्थायांप्रहरणपरायांजनममुं ॥ ३९ ॥
समंतादत्यंतंमृदुकुसुमदुर्गेणशिशुना ।
प्यलशंक्यनो शु नहिजगतिबालेतरजनैः ॥
सुभंक्तुंकूपेनावृतसकलदेहौतमधुना ।
पुरोऽस्मद्देशस्यायतजलधितुल्येनसहितौ ॥ ४० ॥
नगर्यामेकस्यामसितवदनौपर्वततनू ।
यमाद्विष्णवादिभ्योप्यचलयशसौपूर्वमधुना ॥
नशक्यौतौजेतुंनृपजयजयेत्युक्तनृपतिः ।
पुरीभुक्तासेयंसितलपनगर्भोऽजनितदा ॥ ४१ ॥

अतश्चरगृहंगच्छावइतिताभ्यांसहानिष्क्रांतः ।

ततःप्रविशतिशेषः ।

**शेषः**—सकोभवेत्यः कोपिस्वास्त्रेणद्विजिव्हानपिविगतजिव्हान्कृत्वा मच्छ्रुतिविषयतांप्राप्तः । भवतुतमेवमारयामीतिनिष्क्रांतः ।

ततः प्रविशतिशतधन्वमुनिः शिष्यश्च ।

**मुनिः**—वत्सः किंकर्तुकामोभवेत् ।

**शिष्यः**—भवान्तेनसहवनंगत्वाहतसेनापतिंमातृवर्गंयदाचापश्यः तदामातरंदुष्टबुद्धिनाहतामितिनिशम्यबहुधाविलप्यैनां जीवयामीतिभवंतमेवावादीत्सः ।

**मुनिः**—सत्यंततस्ततः ततोवत्सशेषादमृतमाहृत्यैतस्यांसिंचतिचेज्जीवतीतिकथयित्वायदानिर्गतोऽसि तदास्वास्त्रेणपातालस्थवाताशनान्खंडयन्शेषंभुवं प्रापितवान् ।

**मुनिः**—ततस्ततः ।

**शिष्यः**—ततःशेषःस्वशीर्षस्थमणिनाशितांधकारोयुद्धायोद्युक्तः ।

**मुनिः**—ततस्ततः ।

**शिष्यः**—ततः परस्परंशांतहृदयशेषयोः युद्धेप्रवृत्तेसाति । तथाहि ।

पयोधराभ्यांगतवायुरेवनृपस्सभूमौपततीतिसूर्यः ॥
मत्वापितैनैवतिरोहितांगः स्थितोवरेहंतिभयादयंमां ॥ ४२ ॥

**मुनिः**—ततस्ततः ।

**शिष्यः**—ततः सक्ष्वेलंप्रलयकठोरेसंग्रामेमर्द्धिबभेदिनः कियंतइतिद्रष्टुकाम इवकर्मसाक्षीप्रादुर्बभूव । ततोनृपशरोप्ययंनःप्रभुशिरस्ताड्यतेरविपादैरिति रोषादिवतत्पादान्चिच्छेद । अन्यथासरविःपश्चात्तापमुपगतः सन्रक्तांगःपयोनिधौकिमर्थमपतत् ।

**मुनिः**—ततस्ततः ।

**शिष्यः**—ततःशेषः शांतहृदयपराजितोऽस्मित्वन्माताजीवितुममृतमानीय तुभ्यंददाम्यतोऽस्त्रमुपसंहरेतिकथयित्वास्वलोकमेत्यामृतमानीयादात् ।

**मुनिः**—ततस्ततः ।

**शिष्यः**—ततःशांतहृदयोऽमृतमादायग्रहमगतोभवेत् अतोवयमपिगच्छाम इतिनिष्क्रांतौ ॥ इतिनिष्क्रांताः सर्वे ॥

**इति षष्ठोंकः ॥**

# अथ सप्तमोंकः ।



ततः प्रविशतिशांतहृदयः शतधन्वमुनिश्च ।

**शांतहृदयः**—तातमज्जननींजीवितुंकिंवस्तुन्यूनंभवेत् ।

**मुनिः**—संजीवननामकावनस्पतिः ।

**शांतहृदयः**—आनयामिकुत्रवर्तते ।

**मुनिः**—सादुर्लभा ।

**शांतहृदयः**—कुत्रवर्ततेकथयतुतातः । तथाहि । किंभूतलेनैववनस्पतिःसा ।

**मुनिः**—नैवतिष्ठति ।

**शांतहृदयः**—किं स्वर्गकेतात ।

**मुनिः**—नवत्सतत्र ।

**शांतहृदयः**—पाताललोकेपिनतत्रसाकिं ।

**मुनिः**—

सिंधूनतिक्रम्यगतेतिविद्धि ॥ १ ॥

**शांतहृदयः**—तर्हिसप्तापिसिंधूनुल्लंघ्यतांवनस्पतिमानयामि । आज्ञापयतुतातः ।

**मुनिः**—केनमार्गेणगच्छसि ।

**शांतहृदयः**—दक्षिणेन ।

**मुनिः**—ससंभ्रमं । माकुरुतेनपथागमनं ।

**शांतहृदयः**—किमर्थं ।

**मुनिः**—तत्रमूषकपतनव्याधिर्वर्तते । तथाहितत्रस्थजनैः ।

भवनंभकाररहितंक्रियतेभवपुत्रवाहनैः पतनं ॥

कृत्वावनंभसहितंललनाकरभोजनायभूपैश्च ॥ २ ॥

अपिच ।

अहमतिकठिनोऽहमेवपूर्वंचिरतरमाजिजितः पलायितोऽपि ॥

वनमिवकुचकुंभभीतिभारात्क्षणमपिविश्रामितुंभकारयोघः ॥ ३ ॥

सपदितमनुधाविनंविलोक्यपितृवनगेहपदारविंदमागात् ॥
अवहदितितमाहशंकरश्चभवइतिनामयथार्थमस्यचासीत् ॥ ४ ॥
अलमलमतिसाहसेनपीडांमवनभकारभटायदेहिमामा ॥
इतिभववचसाहसंतमाहविवदतिव्यर्थमसौभकारयोधः ॥ ५ ॥

**शांतहृदयः**—ज्ञातंतेनअलं । मार्गेणकेनगच्छाम ।
**मुनिः**—उत्तरेण । गत्वापिसमुद्रोल्लंघनंकथंक्रियते ।
**शांतहृदयः**—कथमपिगच्छाम्याज्ञपयतु ।
**मुनिः**—गच्छ ।
**शांतहृदयः**—किंचिद्गत्वा । हंसयुगंदृष्ट्वासविस्मयं ।

मातर्मातः क्वचिदपित्वयानैवनी तौहिआवां ।
वृक्षस्कंधेनिहितसदनौहंतिसिंहःकृतांतः ॥
भूपोमूढोनभजतिकृपांशीघ्रमागच्छमातः ।
कौशंतौवांसपादिपृथुकौधावयामासचित्तं ॥ ६ ॥

सिंहंहंति । तदनुनृपकृतात्मकृतांतवधौहंसौसंतुष्टमनसाराजेंद्रकृपार्द्रचेतसा त्वयारक्षितयोरावयोः शतवर्षपर्यंतंजीवितंजातमतोऽऽकल्पपालिताभूर्वात्वितिवचनमकर्ण्यागतावपिमातरपितरौनपृच्छंतावलोक्य डिंभकौमदीयदुग्धंपिबतमितिवचनमाकर्ण्यापिमातर्नपिबावस्त्वदीयदुग्धंयावत्तस्यमनोरथोनसाध्यते तावदितिवाण्यान्नृपसमीपमागत्यभूपत्वन्मनसिकिंवर्ततेकंवामनोरथंसाधयावइतिताभ्यांदंपती-भ्यां प्रबोधितोनृपतिः संजवनवनस्पतिः कीरसमुद्रेवर्ततेसैवसाध्यते समुद्रोल्लंघनार्थंयुवयोः सहायः प्रार्थ्यतइतिउक्त्वाविमानीकृतराजहंसदंपतिरसौविमानीकृतराजहंसश्चतुर्मुखस्सत्यलोकं संत्यज्यदैत्यभयात्समुद्रशायिनंनारायणं स्तोतुंसवेगंगच्छतीववनदेवतैरुच्चार्यमाणः तूर्णमेवसत्पापिसमुद्रानुलंघ्यकीरसमुद्रस्थांवनस्पतिमुपेत्यआदायपुनरपि निवर्त्यतथाभूतएवसयुद्रतटमनुपपात ।

उत्सृष्टहंसयुगलश्चनृपः सशीघ्रंप्रेम्णातयो स्तरुतलेन सहैवधावन् ॥
आगत्यमातरमयंहतकामपि द्राक्तस्थौ पुरोवनमृषेर्निहितौषधिः सन् ॥७॥

**मुनिः**—सविस्मयं । वत्सकथंप्राप्ता इयंवनस्पतिः ।
**शांतहृदयः**—भवतामनुग्रहात्सर्वं करतलगतमेव !
**मुनिः**—सहर्षं । वत्सास्थीन्यानय ।

**शांतहृदयः**—मातुरस्थीन्यानयति । वत्सस्वप्नाग्निवर्तमानेवैनामुत्थापयामि । इति अमृतसेचनं कृत्वासंजीविन्योत्थापयति ।

**बाळावती**—उत्थाय । हावत्सकुत्रतिष्ठासि ।

**शांतहृदयः**—पादयोः प्रणम्य ।

कमठजननंमातुर्मातोविशीर्षठकारहृत् ।
प्रभवतिपुनर्जीवायैवममापिपितुस्तव ॥
पितरमधुनादुर्बुद्धिस्त्वांयथानिजघानहि ।
विगतशिरसायातस्सोऽपितथानमतीत्यसौ ॥ ८ ॥

तदनंतरं ।

**बाळावती**—वत्सतेनहतंसेनापतिमादौजीवय ।

**शांतहृदयः**—तथेतिजीवयति ।

**सेनापतिः**—सप्रेम । नत्वा आयुष्मन्रथमादायागच्छामि ।

**बाळावती**—वत्समुनेराश्रमंगच्छामः ।

**शांतहृदयः**—किमर्थंतत् । स्वनगरंगच्छामः । सेनापतेरथमानय । सेनापतिस्तथेतिनिष्क्रांतः ।

**मुनिः**—वत्साकिंमात्रासहाधुना स्वनगरंगच्छामः किंनीलपुरं ।

**शांतहृदयः**—कथंमन्यतेभवान् ।

**मुनिः**—नीलपुरंगच्छामःकार्यगौरवात् ।

**शांतहृदयः**—तथेतिमुनिनामात्रासहनिष्क्रांतः ।

ततःप्रविशतिसभार्योनीलसेनः ।

**नीलसेनः**—प्रियेसुष्ठुजातं । वत्सस्यशांतहृदयस्यपट्टाभिषेकोभविष्यतीति । किंतुशतधन्वमुनेरागमनेनाश्रमः पूतः । तदनुग्रहेणैववत्सस्यसर्वकुशलमेव । तेनदुष्टबुद्धिनाहतामपिमातरमजीवयत् अधुनासएवपितरंजीवयतीतिसेनापतिमुखेन श्रुत्वा तदस्थीनितत्रवर्ततेइतिकथयित्वाऽहमागतोऽस्मि ।

**प्रिया**—सजीवितोभवेत् मुनिप्रभावात् । किंतुएतादृशएवपुत्रः नान्यः । तथाहि ।

एकेनापिगुणेनैवयस्यस्तोत्रंनजायते ॥
तेनालंजन्मनातस्यमातुर्दुःखैकहेतुना ॥ ९ ॥

**नीलसेनः**—अधुनाजीवयतिनवेतिसंशयः । ततःपटाक्षेपेणसेनापतिः प्रविश्य । पुत्रोऽजीवयत्तातंपुष्पसेनं ।

**नीलः**—तमीक्ष्य । एतत्कथं । ततस्ततः ।

**सेनापतिः**—सपुष्पसेनः पुत्रस्यपट्टाभिषेकार्थं गमनोन्मुखस्त्वामाव्हयति ।

**नीलः**—कुत्राभिषेकोभविष्यति ।

**सेनापतिः**—तत्रपुरि । तथाहि ।

यस्यांहिमांशुमबलाहिस्वसौधजाल- ।
मार्गात्समागतममुंजलधौक्रुधाऽऽदौ ॥
ज्ञात्वानिहत्यविटमेनमपातयन्स ।
ह्यद्यापिकल्यसमयेविपरीतवाहः ॥ १० ॥
यस्यांपरेद्युरपिसौधतलेसुधांशुं ।
नोऽताडयन् शठकुतो क्षणदागतंते ॥
हस्तैःप्रियाधरसुधामपहृत्ययासीत्युक्तो ।
गदांगभवचंद्रनरोऽधुनासः ॥ ११ ॥
यस्यांपयोधरकरंनभसीतिरोषा ।
लुप्तद्वितीयलिपिमाठराविद्धभानुं ॥
ज्ञात्वानियुज्यललनाभिरयंविमेघं ।
पाकेपयोधरकरोभववंचितोऽभूत् ॥ १२ ॥
यस्यांपयोधरवलिर्गत वायुमेव ।
यन्मांकरोतिशतमन्युरुषैवमुक्ताः ॥
आसांहिसौधतलमेत्यप्रणालिरुद्धाः ।
क्रोशंतएवनितरांरुरुदुश्चमेघाः ॥ १३ ॥
यस्यांहिवर्तुलसुगंधिभिरेवजेतु ।
माकाशपद्ममबलाननपद्ममेत्य ॥
संपातितंभुविजलेजितमंबुजंतत् ।
स्त्रीभिर्मुखैःस्वपदमाप्तुमलंनशक्तं ॥ १४ ॥
यस्यांनिशम्यललनावचनानिमीतो ।
भिंदंतिकुंभमितिकंठस्वजःकुलालः ॥

मानोःकरेषुनिहितानकरोत्समस्तान् ।
दार्ढ्यार्थमेवममचित्तमिदंहिभाति ॥ १५ ॥
तस्यांहिपुष्पवतिख्यातपुरीतिराजन् ।
पौत्रस्यतेशिरासिमंगलदुग्धधारां ॥
साध्वीयुतस्यऋषिसंघकरात्पतंतीं ।
राज्याधिरोहणमिदंभववीक्ष्यतुष्टः ॥ १६ ॥

प्रविश्य शिष्यः । तोषितोऽस्मि २। जयतु २ महाराजः

**राजा**—कस्मादागतोऽसि ।

**शिष्यः**—शतधन्वाश्रमात् । किंतुसर्वेराजानः पौष्पसेनाभिषेकमहोत्सव-दर्शनार्थंगताइतितोषितोऽस्मि ।

**नीलः**—अहमपितेनसहगत्वातस्याभिषेकं करोमि । सेनापतेशीघ्रमाग-च्छेति निष्क्रांतः ।

**शिष्यः**—सेनापतेऽद्याचित्ततरंकर्मदृष्टं ।

**सेनापतिः**—किंकिंदृष्टं ।

**शिष्यः**—यदाहंएतदाश्रमान्निर्गतः । तदाएकोऽऽह ॥

आमृत्योःपरदारदेहभवनंसाक्षाद्यमःकथ्यते ।
सूर्यांतर्गतताड्यतेऽयमुदधेर्जातेशनारायण ॥
पुत्रोगेहमुपैतुतेयदिमतिर्नास्तीतिपुत्रस्वकं ।
तर्ह्येनंनितरांजहीतिजनयस्यास्वास्थ्यमाजातुचित् ॥ १७ ॥

अपरा ।

मातुःसहोदरफलंघटतुल्यमीशः ।
पीनंममोरसिनिधायविनिर्गतोहि ॥
क्रीणासिचेत्कुरुकरंफलकेसुपक्वं ।
पक्वंनचेदमितिवेत्सियुवन्रजन्यां ॥ १८ ॥
थायेत्युरोजघटकोष्ठकराननेतौ ।
कृत्वाविलोमलिपिघर्मजलेनकांते ॥
अंगत्वुरोजजधनादिप्रसिक्तमस्या ।
वक्षस्थमन्मथशिखीनतथाहिसिक्तः ॥ १९ ॥

कस्मात्त्वंललनांसुताडिततनूंकुर्वन्सदानिंद्यसे ।
सासूतेतनयंनहीतिभुजयोर्न्यस्तांगकाऽहर्निशं ॥
आगोऽस्तीतिममापिनोकिमिहमांब्रूहीतिबालेऽपिवा ।
वृद्धेवातरुणेषुसक्तवपुषःपुत्रस्तुजातोनहि ॥ २० ॥
मुग्धेकिंनिहितंनिजोरसियुवन्नेदंसुपक्कंफलं ।
किंरक्तंनहिचंदनंकिमुशरोमारस्यनोतत्फलं ॥
तन्मूल्यंसुभगेकियद्वद्दत्त्वतंक्रीणासिचेत्स्पर्शय ।
चक्षुर्भूतममैल्यवस्तुददतोरात्रौनतेन्यत्क्रयं ॥ २१ ॥
अर्कात्किंसुभगेबिभेषि मिथुनं नेद्यंसदाकर्मभिः ।
पुत्रत्वंनरकेनिपातयचिरंदूतैर्वदेदास्विति ॥
छिंद्यामर्कजमंबुजाक्षिनितरांचार्कप्रभातेयदि ।
तर्ह्यागत्यममांतगेहमधुनालिंगस्वमांवक्षसि ॥ २२ ॥
अहरादितिमयाहठाद्गृहीतं ।
कुचयुगलंसखितेमनःकराभ्यां ॥
वदममपथिकोऽपिमंतुरत्र ।
किमुसकलैर्भुविगृह्यतेनचोरः ॥ २३ ॥
बालेकिंभवनस्यमार्गविलुठल्लाक्षारसेनांकितौ
त्वत्पादाववलोक्यतेनजतुनारक्तंमदीयंमनः ॥
नेत्वंतेकिमितोह्यपेहिचरणेसक्तंमदीयेयुवन्
क्रोधव्यूहकुचाख्यकुंभयुगलाच्छेषोस्तिकोपः कियान् ॥२४॥
कस्मान्मूर्खमदीयहेमघटयोः सक्तंत्वदीयंमनो
नांतंसुंदरिवक्षसिस्थितमितिवस्तुद्वयंतेपुनः ॥
नाद्यंमित्रमितीवकर्षतिबलात्स्वत्धेमकुंभद्वयं
तर्ह्यागत्यममांतगेहमधुनालिंगस्वमांवक्षसि ॥ २५ ॥
व्यापारायपतिर्गतश्चविपतिः श्वश्रूः किलांधामम
वित्तंसद्मनिचास्तितस्करभयादाबद्धकंपोरसि ॥
रात्रौमांतरुणींस्वबाहुपतितांकृत्वामुहुःपीठयन्
स्थित्वातत्धृतकक्षमश्वभवनंयाहीतिकस्येयुवन् ॥ २६ ॥

**सेनापतिः**—जितेंद्रियस्यकिमनयावार्तया ॥
**शिष्यः**—तच्चकथयामि । तथाहि
ज्ञाताः साम्या ज्ञानन्मातुः ॥ सर्वामेशवामायेन ॥ २७ ॥
किंतु ।
णमेकेतिविलोमेनकृत्वाध्यायन्नरोहरेः ॥
अंगानिसर्वपापेभ्योमुक्तःसन्मोक्षमाप्नुयात् ॥ २८ ॥
सेनापतेएतदर्थनजाने । श्लोकमन्यंश्रुणु ।
तदर्थस्तुकथ्यतां । तथाहि ॥
कायोगियोगविघ्नाशीहतानांकोऽसतामरिः ।
भक्तार्तिहंताकोदेवस्त्वत्रैवोक्तंनबुद्ध्यते ॥ २९ ॥
( नेपथ्ये । ) भोभोवैदूर्यइंद्रनलिाद्यनेकभूपतिमुकुटगतमाणिकिरणप्रभाशोभितजनः साध्वीयुत कुमारपौष्पसेनिराज्याधिरोहणकालेऽगतइतितत्पित्र्योश्चित्तस्यानदोऽभूत् । तच्छीघ्रमागच्छतांबंधुजनः ।
**सनैापतिः**—अये एषमहाराजः तत्समीपमेवगच्छावः इतिनिष्क्रांतौ । ततः-प्रविशत्यासनस्थस्सभार्यः सगुरुः कुमारः शांतहृदयः । पश्चात्सभार्यः पुष्पसेनः ।
**गुरुः**—किंतेपरंभूयःप्रियमुपकरोमि । तौपुनःप्रविशतः ।
**सेनापतिः**—उपसृत्य । जयतु २ महाराजः ।
**शिष्यः**—जयतु २ महाराजः ।
**पुष्पसेनः**—भवदनुग्रहात्सर्वमानंदमनुभवामि । किंतुप्रीतश्चेतर्हिदमस्तु
भरतवाक्यं । रेमेरामांमुरोरेरेऽऽरामारामोऽ-
मरेऽमरे ॥ रामारामोऽमरेमा रेरमेमरौमुरारिर ॥ ३० ॥
हरिपदभजनेच्छुरंतरंगेपदयुगलेपदजावगाहनेच्छुः ॥
बहुनृपकरतुष्टपुत्रकःस्यामहमितिकाननगर्भगेहकश्च ॥ ३१ ॥
**गुरुः**—एवमस्तु । इतिनिष्क्रांताः सर्वे ॥

इतिसप्तमोंकः ॥

इंग्रेजीविजपूरजैल्हचरणसर्कोडिताल्लकक ।
भीमाभागिरथीपवित्रजनकनाम्नाल्लिजीवात्मजः ॥

कृत्वाग्रंथमिमंहरेश्चरणयोस्संस्थाप्यगोविंदक ।
स्तुष्टोयेनसुखंकटाक्षपतनाद्गोदावरीलंघिता ॥ १ ॥

इतिश्रीमत्कविकुलतिलकनागरहळ्ळिकुलावतंसकश्रीमद-
त्रिगोत्रभूषण गुराचार्यसुतगोविंदपंडिता-
चार्यविरचितं श्रीमत्पुष्पसेनतनयराज्याधिरोहणं
नाम नाटकं मुन्यग्निवसुभूसंमितशालिवाहन-
शाकेमर्गशीर्षशुक्लद्वितीयायांमुद्रयित्वा.
संपूर्णतांप्रापितं ॥

॥ श्रीकृष्णार्पणमस्तु ॥

समाप्त.